५. अंतलिकितस उप[पं]ता सकासं रञो
अन्तलिकितस्य उपान्तात् सकाशं राज्ञः

६. [को]सीपु[त्र]स [भ]ागभद्रस त्रातारस
कौत्सी-पुत्रस्य भागभद्रस्य त्रातुः

७. वसेन च[तु]दसेंन राजेन वधमानस [॥*]
वर्षेण चतुर्दशेन राज्येन [च] वधमानस्य ॥

*PART II*

१. त्रिनि अमुतपदानि [इअ] [सु]अनुठितानि
त्रीणि अमृत-पदानि इह स्वनुष्ठितानि

२. नेयंति [स्वगं] दम चाग अप्रमाद [॥*]
नयन्ति स्वर्गं—दमः त्यागः अप्रमादः [च] ॥

---

## AYODHYA STONE INSCRIPTION OF DHANDEVA

**Provenance**—Ayodhya, Fyzabad District, U. P.

**Published in**—*J. D. Ratnakar*, Nagari Pracharani Patrika, V, pt. 1, pp. 99-104 ; *G. H. Ojha*, ibid, p. 201 ff ; *K. P. Jayaswal*, JBROS, Vol. X, pp. 202-08 ; ibid, XIII, pp. 247-49 ; *A. Banerji Sastri*, Modern Review, Jan. 1925, p. 59 ; *N. K. Battasali*, ibid, Feb. 1925, p. 202 : *N. G. Majumdar*, Ann. Bhand. Or Res. Inst., VII, pts. I & II, pp. 160-63 ; *D. R. Sahni*, Ep. Ind., XX, p. 57 ; *D. C. Sircar*, Select Inscriptions, p. 96.

**Language**—Sanskrit with Prakrit influence.

**Script**—Brahmi of not earlier than 1st cent. A. D.

**Object**—A building (for the image of the deceased) or a memorial structure or pillar (ध्वजस्तम्भ) on the relics of the deceased in the cremation ground.

१: कोसलाधिपेन द्विरश्वमेध-याजिनः सेनापतेः पुष्यमित्रस्य षष्ठेन कौशिकी-पुत्रेण धन[देवेन ?]

२, धर्म-राज्ञा (धर्मराजेन) पितुः फल्गुदेवस्य केतनं कारितं [॥*]

---

# SARNATH BUDDHIST IMAGE INSCRIPTION OF THE 3rd YEAR OF KANISHKA'S REIGN

**Provenance**—Sarnath.

**Published in**—*J. Ph. Vogel*, Ep. Ind., Vol. VIII, p. 173 ff.

**Language**—Prakrit.

**Script**—Early Kushana Brahmi.

**Object**—Setting up of a gigantic image of बोधिसत्त्व

**iii (A)**

१. महारजस्य कनिष्कस्य सं ३ हे ३ दि २० २
*महाराजस्य कनिष्कस्य सं ३ हे ३ दि २० २*

२. एतये पुर्वये भिक्षुस्य पुष्यवुद्धिस्य सद्ध्ये वि-
*एतस्मिन् पूर्वस्मिन् [तिथौ] भिक्षोः पुष्यबुद्धेः साधं-वि-*

३. हारिस्य भिक्षुस्य बलस्य त्रेपिटकस्य
*रिणः भिक्षोः बलस्य त्रैपिटकस्य*

४. बोधिसत्वो छत्रयष्टि च प्रतिष्ठापितो
*बोधिसत्त्वः छत्र-यष्टिः च प्रतिष्ठापिता*

५. बाराणसिये भगवतो चंकमे सहा मात[ा]-
*वाराणस्यां भगवतः चङ्क्रमे सह माता-*

६. पितिहि सहा उपद्ध्यायचेरेहि सद्ध्येविहारि-
*पितृभ्यां सह उपाध्यायाचार्यैः सार्ध-विहारि-*

७. हि अन्तेवासिकेहि च सहा बुद्धमित्रये त्रेपिटिक-
*भिः अन्तेवासिकैः च सह बुद्धमित्रया त्रैपिटक-*

८. ये सहा क्षत्रपेन वनस्फरेन खरपल्ला-
*या सह क्षत्रपेण वनस्फरेण खरपल्ला-*

९. नेन च सहा च[तु]हि परिषाहि सर्वसत्वनं
*नेन च सह चतुर्भिः परिषद्भिः सर्व-सत्त्वानां*

१०. हितसुखार्त्थं
*हित-सुखार्थम् ॥*

iii (B)

१. भिक्षुस्य बलस्य त्रेपिटकस्य
भिक्षोः बलस्य त्रैपिटकस्य

२. महक्षत्रपेन खरपल्लानेन
महाक्षत्रपेण खरपल्लानेन

iii (C)

बोधिसत्वो प्रतिष्ठापितो...
बोधि-सत्त्वः प्रतिष्ठापितः

सहा क्षत्रपेन वनस्परेन
सह क्षत्रपेण वनस्फरेण ।

iii (D)

१. महारजस्य कनिष्कस्य सं ३ हे ३ दि २० [२]
महाराजस्य कनिष्कस्य सं ३ हे ३ दि २० २

२. एतये पुर्वये भिक्षुस्य बलस्य त्रेपिट[कस्य]
एतस्मिन् पूर्वस्मिन् [तिथौ] भिक्षोः बलस्य त्रैपिटकस्य

३. बोधिसत्वो छत्रयष्टि च [प्रतिष्ठापितो]
बोधि-सत्त्वः छत्र-यष्टिः च प्रतिष्ठापिता ।

---

## JUNAGARH ROCK INSCRIPTION OF RUDRADAMAN

**Site**—Junagarh in Kathiawar.

**Published in**—*Prinsep*, JASB, VII. pp. 338 ff. ; *Bhau Daji*, JBBRAS, VII, p. 113 f., 118 f., 125 f. ; Arch. Sur. W. Ind., II, p, 128 ff. ; *Bhagwanlal Indraji*, and *Buhler*, Ind. Ant. VII, p. 257 ff, ; *Kielhorn*, Ep. Ind., VIII, p. 42 ff. ; *D. C. Sircar*, Select Inscriptions, p. 169 ff.

**Language**—Sanskrit.

**Script**—Northern Brahmi.

**Object**—Repairs to Sudarsana lake.

१. सिद्धं [॥*] इदं तडाकं सुदर्शनं गि[रि]नगराद[पि(वि)दू ?]-रम[न्त]........................[मृत्ति]कोपल-विस्तारायामोच्छ्रय-निः-सन्धि-बन्ध-दृढ-सर्व्व-पालीकत्वात्पर्व्वत-पा-

२. द-प्प्रतिस्पर्द्धि सुश्लि[ष्ट-बन्धं]............... [मव]जातेनाकृत्रिमेण सेतु-बन्धेनोपपन्नं सुप्प्रतिविहित-प्प्रणाली-परी[व]ाह-

३. मीढ-विधानं च त्रि-स्क[न्ध ?]........... नादिभिरनुग्रहैर्महत्युप-
चये वर्त्तते[।*] तदिदं राज्ञो महाक्षत्रपस्य सुगृही-

४. त-नाम्नः स्वामि-चष्टनस्य पौत्र[स्य] [राज्ञः क्षत्रपस्य सुगृहीत-
नाम्नः स्वामिजयदाम्न]ः पुत्रस्य राज्ञो महाक्षत्रपस्य गुरुभिरभ्य-
स्त-नाम्नो रुद्रदाम्नो वर्षे द्वि-सप्ततित[मे]

५. ७० २ मार्ग्गशीर्ष-बहुल-प्र[तिपदि] ...........: सृष्ट-वृष्टिना
पर्ज्जन्येन एकार्णवभूतायामिव पृथिव्यां कृतायां गिरेरूर्जयतः
सुवर्णसिकता-

६. पलाशिनी-प्रभृतीनां नदीनामतिमात्रोद्वृत्तैर्वेगैः सेतुम[?]......
[य]माणानुरूप-प्रतीकारमपि गिरि-शिखर-तरु-तटाट्टालको-
पतल्प-द्वार-शरणोच्छ्रय-विध्वंसिना युग-निधन-सदृ-

७. श-परम-घोर-वेगेन वायुना प्रमथित-सलिल-विक्षिप्त-जर्ज्ज-
रीकृताव[दीर्ण]........[क्षि]प्ताश्म-वृक्ष-गुल्म-लता-
प्रतानं आनदी-[त]ला[दि]त्युद्घाटितमासीत्[।*]चत्वारि हस्त-
शतानि वीशदु(विंशत्यु)त्तराण्यायतेन एतावन्त्येव [विस्तीर्णेन]

८. पंच-सप्तति हस्तानवगाढेन भेदेन निस्सृत-सर्व्व-तोयं मरु-धन्व-
कल्पमतिभृशं दु[र्दशनमासीत्] [।*]......[स्या]र्थे मौर्यस्य
राज्ञः चन्द्रगु[प्तस्य] राष्ट्रियेण [वै]श्येन पुष्यगुप्तेन कारितं
अशोकस्य मौर्यस्य [कृ*]ते यवन-राजेन तुष[ा]स्फेनाधिष्ठाय

९. प्रणालीभिरल[ं] कृत [ं] [।*] तत्कारितया च राजानुरूप-
कृत-विधानया तस्मि[न् भेदे] दृष्टया प्रनाड्या वि[स्तृ]त-
से[तु*]........णा आ गर्भात्प्रभृत्त्यविहत-समुदि[त]-र[ा]ज-
लक्ष्मी-धारणा-गुणतस्सर्व्व-वर्णैरभिगम्य रक्षणार्थं पतित्वे वृतेन
[आ] प्राणोच्छ्वासात्पुरुषवध-निवृत्ति-कृत-

१०. सत्य-प्रतिज्ञेन अन्य[त्र] संग्रामेष्वभिमुखागत-सदृश-शत्रु-
प्रहरण-वितरणत्वाविगुण-रि[पु?]...............[घृ]त-कारुण्येन

स्वयमभिगत-जनपद-प्रणिपति[ता*यु]ष[ं]-शरणादेन दस्यु-व्याल-मृग-रोगादिभिरनुपसृष्ट-पूर्व्व-नगर-निगम-

११. जनपदानां स्व-वीर्य्यार्जितानामनुरक्त-सर्व्व-प्रकृतीनां पूर्व्वापराकरावन्त्यनूप-नीवृदानर्त्त-सुराष्ट्र-श्व[भ्र-म रु-कच्छ-सिन्धु-सौवी]र-कुकुरापरांत-निषादादीनां समग्राणां तत्प्रभावा-द्य[थावत्प्राप्तधर्म्मार्त्थ]-काम-विषयाणां विषयाणां पतिना (पत्या) सर्व्व-क्षत्राविष्कृत-

१२. वीर-शब्द-जा[तो]त्सेकाविधेयानां यौधेयानां प्रसह्योत्सादकेन दक्षिणापथ-पतेस्सातकर्णेर्द्विरपि निर्व्याजमवजित्यावजित्य संबंधा[वि]दूर[त*]या अनुत्सादनात्प्राप्त-यशसा वा(द ?)...... [प्राप्त]-विजयेन भ्रष्ट-राज-प्रतिष्ठापकेन यथार्त्थ-हस्तो-

१३. च्छ्रायार्जितोर्जित-धर्मानुरागेण शब्दार्त्थ-गान्धर्व्व-न्यायाद्यानां विद्यानां महतीनां पारण-धारण-विज्ञान-प्रयोगावाप्त-विपुलकी-र्त्तिना तुरग-गज-रथचर्य्यासि-चर्म-नियुद्धाद्या...... ति-पर-बल-लाघव-सौष्ठव-क्रियेण अहरहर्द्दान-मानान-

१४. वमान-शीलेन स्थूल-लक्षेण यथावत्प्राप्तैर्बलिशुल्क-भागैः कनक-रजत-वज्र-वैडूर्य-रत्नोपचय-विष्यन्दमानकोशेन स्फुट-लघु-मधुर-चित्र-कान्त-शब्द-समयोदारालंकृत-गद्य-पद्य[काव्य-विधान-प्रवी-णे]न प्रमाण-मानोन्मान-स्वर-गति-वर्ण्ण-सार-सत्वा(त्वा)दिभिः

१५. परम-लक्षण-व्यंजनैरुपेत-कान्त-मूर्त्तिना स्वयमधिगत-महाक्षत्रप-नाम्ना नरेंद्र-[कन्या]-स्वयंवरानेक-माल्य-प्राप्त-दाम्न(ा) महा-क्षत्रपेण रुद्रदाम्न[ा] वर्ष-सहस्राय गो-ब्रा[ह्मण] ............... [र्त्थं] धर्म्म-कीर्त्ति-वृद्ध्यर्थं च अपीडयि[त्व]ा कर-विष्टि-

१६. प्रणय-क्रियाभिः पौर-जानपदं जनं स्वस्मात्कोशा(त्*) महता धनौघेन अनतिमहता च कालेन त्रिगुण-दृढतर-विस्तारायामं सेतुं विधा[य स]र्व्व-त[टे]...... [सु]दर्शनतरं कारितमिति [।*] [अस्मि]न्नर्त्थे

१७. च महा[क्ष]त्रप[स्य] मतिसचिव-कर्मसचिवैरमात्य-गुण-समुद्यु-
क्तैरप्यतिमहत्वाद्भेदस्यानुत्साह-विमुख-मतिभि[ः] प्रत्य[ा]
ख्यातारं[भं]

१८. पुनः-सेतु-बन्ध-नैर[ा]श्याद्हाहाभूतासु प्रजासु इहाधिष्ठाने पौर-
जानपद-जनानुग्रहार्थं पार्थिवेन कृत्स्नानामानर्त्त-सुराष्ट्रानां(णां)
पालनार्त्थन्नियुक्तेन

१९. पह्लवेन कुलैप-पुत्रेणामात्येन सुविशाखेन यथावदर्थ-धर्म-
व्यवहार-दर्शनैरनुरागमभिवर्द्धयता शक्तेन दान्तेनाचपलेना-
विस्मितेनार्य्येणाहार्य्येण

२०. स्वधितिष्ठता धर्म-कीर्त्ति-यशांसि भर्तुरभिवर्द्धयतानुष्ठित-
मिति । (॥)

---

## SANCHI INSCRIPTION OF SRIDHARAVARMAN

During the age of Svami Jivadaman, father of
Kshatrapa Rudrasimha II

Saka Year 201

**Provenance**—Village Kanakheda near Sanchi in Madhya Pradesh.
**Published in**—*R. D. Banerji*, Ep. Ind., Vol. XVI, p. 232.
**Language**—Sanskrit, partly in prose and partly in verse.
**Script**—Northern Brahmi.
**Object**—Excavation of a well by the General (महादण्डनायक) *Sridhara-varman,* the Scythian (शक), who was the son of *Nanda,* the Scythian, in the kingdom-increasing year 13.

१. सिद्धं ॥ भगवतस्त्रिदश-गण-सेनापतेरजितसेनस्य स्वामि-
महासेन-महातेज······सादित्य-वीर्य्य-जीवदाम·········

२. धर्म्म-विजयेन शक-नन्द-पुत्रेण महा-दण्डनायकेन शकेन श्रीधर-
व[र्म्म]णा वर्म्म··········स्रा(श्रि)य स्व-राज्याभिवृद्धि-करे वेज-
यिके [सं]वत्सरे त्रयोदश[मे]

३. श्रवण-बहुलस्य दशमी-पूर्व्वकमेतद्दिवसं कल्याणाभ्युदय-वृद्ध्यर्थ-
मक्षय-स्वर्ग्गावाप्तिमेतद्धर्म-यशो[ऽ*]र्त्थं धम्मासि-संबुद्धया
(or संवृद्धया) श्राद्ध..........

४. शाखाते चतुः-सत्य........तुको [ऽ*]यं..........।..........मापि......
कापि[ञ्च] म.....सलिलः सर्व्वाभिगम्यः सदा

५. सत्वा(त्त्वा)[नां] प्रिय-दर्शनो जल-निधिर्द्धस्मामलः — गतः......
प्य..............प्राच्य............

६. कू[पः] श्रीधरवर्म्मणा गुणवता खानापितो [ऽ*]यं शुभः[।।*]
२०० १..........स..........स्तु ।।

---

# KOSAM STONE-SLAB INSCRIPTION OF BHADRAMAGHA'S REIGN

## The year 81

**Provenance**—Kosam in Allahabad District. Dug out, 2 ft. below the surface, from the western bank of an old dried up *nala*, near the village Nauhai, near 1½ miles N. W. of the well-known Kosam Pillar.

**Published in**—*Krishna Deva*, Ep. Ind., Vol. XXIV, p. 253 ff.

**Language**—Prakrit.

**Script**—Brahmi of the later Kushana period, but म and ह show advanced forms, rare in Kushana but common in Gupta records.

**Object**—Setting up of the slab-seats by the guild of the stone-masons of Katsa.

१. **महारजस्य श्री-भद्रमघस्य सवत्सरे एकसीते ८० १ गृष्म-पक्षे**
*महाराजस्य श्री-भद्रमघस्य संवत्सरे एकाशीतितमे ८० १ ग्रीष्म-पक्षे*
**द्वितीय(ये) २ दिवसे पञ्चमे ५**
*द्वितीये २ दिवसे पञ्चमे ५*

२. **एतये पुरुवये कत्स-पस्थरिक-श्रेणिय आसन-पट्टा स्थपत [।।*]**
*एतस्मिन् पूर्वस्मिन् [तिथौ*] कत्स-प्रस्तरिक-श्रेण्या आसन-पट्टाः स्थापिताः ।।*

# ALLAHABAD PILLAR INSCRIPTION
## OF SAMUDRAGUPTA (*c.* 330-375 A. D.)

**Site**—Allahabad Fort.

**Published in**—*Fleet*, Corp. Ins. Ind., Vol. III, No. 1, pp. 6 ff. ; *D. C. Sircar*, Select Inscriptions, pp. 254 ff. ; *Bhandarkar's* List, No. 1538.

**Language**—Sanskrit, partly verse, partly prose.

**Script**—Northern Brahmi.

**Metres**—Uncertain 1, 2 ; स्रग्धरा 3, 5, 8 ; शार्दूल-विक्रीडित 4, 7 ; मन्दाक्रान्ता 6 ; पृथ्वी 9.

**Object**—It describes the glory, conquests and descent of Samudra-Gupta.

१. [यः] कुल्यैः स्वै..................तस..................

२. [यस्य ?]..........................................................
..................................... [।।*] [१]

३. पुं (?) व ..........................त्र ..........................

४. [स्फु]रद्वं (?)........................................क्षः स्फुटो-
[द्ध् वं]सित..............प्रवितत..................[।।*] [२*]

५. यस्य प्र[ज्ञानु]षङ्गोचित-सुख-मनसः शास्त्रत[त्त्वा]र्त्थ-भर्त्तुः
[– –] स्तब्धो [⏑ – – – ⏑)नि(⏑ ⏑ ⏑ ⏑ – ]नोच्छ्-
[– – ⏑ – –]

६. [स]त्काव्य-श्री-विरोधान्बुध-गुणित-गुणाज्ञाहतानेव कृत्वा
[वि]द्वल्लोके [ऽ*]वि[नाशि ?] स्फुट-बहु-कविता-कीर्त्ति-राज्यं
भुनक्ति[।।*] [३]

७. [आ]र्य्यो हीत्युपगुह्य भाव-पिशुनैरुत्कर्णितै रोमभिः सभ्येषूच्छ्व-
सितेषु तुल्य-कुलज-म्लानाननोद्वीक्षि[तः] [।*]

८. [स्ने]ह-व्यालुलितेन बाष्प-गुरुणा तत्त्वेक्षिणा चक्षुषा यः पित्रा
[ऽ*]भिहितो नि[रीक्ष्य] निखि[लां पाह्येवमुर्व्वी]मिति [।।*] [४]

9. [दृ]ष्ट्वा कर्म्माण्यनेकान्यमनुज-सदृशान्यद्भुतोद्भिन्न-हर्षा भ[ा]वैरास्वादय[न्त⏑⏑⏑⏑⏑⏑⏑⏑––⏑––⏑] [के]-चित् [।*]

१०. वीर्य्योत्तप्ताश्च केचिच्छरणमुपगता यस्य वृत्ते [ऽ*]प्रणामे [ऽ*]प्य[र्त्ति ?]-[ग्रस्तेषु ?––⏑⏑⏑⏑⏑⏑⏑⏑–––⏑–– ⏑––] [॥*] [५]

११. संग्रामेषु स्व-भुज-विजिता नित्यमुच्चापकाराः श्वः-श्वो मान-प्र[⏑⏑⏑⏑–––⏑–––⏑––] [।*]

१२. तोषोत्तुङ्गैः स्फुट-बहु-रस-स्नेह-फुल्लैर्म्मनोभिः पश्चात्तापं व-[⏑⏑⏑⏑––⏑] [मं ?] स्य[ा]द्वसन्त[म् ?] [॥*] [६]

१३. उद्वेलोदित-बाहु-वीर्य्य-रभसादेकेन येन क्षणादुन्मूल्याच्युत-नागसेन-ग[णपत्यादीन्नृपान्संगरे ? ।*]

१४. दण्डैर्ग्राहयतैव कोत-कुलजं पुष्पाह्वये क्रीडता सूर्य्येने(णे)त्य(?) [⏑–⏑–] तट[⏑–––⏑–––⏑–] [॥*] [७]

१५. धर्म्म-प्राचीर-बन्धः शशि-कर-शुचयः कीर्त्तयः स-प्रताना वैदुष्यं तत्त्व-भेदि प्रशम[⏑⏑⏑] कु[–च⏑]मु(मु ?) [–⏑]-तार्त्थम् (?) [।*]

१६. [अद्ध्येयः] सूक्तमार्ग्गः कवि-मति-विभवोत्सारणं चापि काव्यं को नु स्याद्यो [ऽ*]स्य न स्याद्गुण इति [वि]दुषां ध्यान-पात्रं य एकः [॥*] [८]

१७. तस्य विविध-समर-शतावतरण-दक्षस्य स्व-भुज-बल-पराक्रमैक-बन्धोः पराक्रमाङ्कस्य परशु-शर-शङ्कु-शक्ति-प्रासासि-तोमर-

१८. भिन्दिपाल-न[ा]राच-वैतस्तिकाद्यनेक-प्रहरण-विरूढाकुल-व्रण-शताङ्क-शोभा-समुदयोपचित-कान्ततर-वर्ष्मणः

१९. कौसलकमहेन्द्र-माह[ा*]कान्तारकव्याघ्रराज- कौरालकमण्टाराज-पैष्टपुरकमहेन्द्रगिरि-कौट्टूरकस्वामिदत्तैरण्डपल्लकदमन-काञ्चेयकविष्णुगोपावमुक्तक-

२०. नीलराज-वैङ्गेयकहस्तिवर्म्म-पालक्ककोग्रसेन-दैवराष्ट्रककुबेर-कौस्थलपुरकधनञ्जय-प्रभृति-सर्व्वदक्षिणापथराज-ग्रहण-मोक्षानुग्रह-जनित-प्रतापोन्मिश्र-माहाभाग्यस्य

२१. रुद्रदेव-मतिल-नागदत्त-चन्द्रवर्म्म-गणपतिनाग-नागसेनाच्युतनन्दि-बलवर्म्माद्यनेकार्य्यावर्त्तराज-प्रसभोद्धरणोद्वृत-प्रभाव-महतः परिचारकीकृत-सर्व्वाटविक-राजस्य

२२. समतट-डवाक-कामरूप-नेपाल-कर्त्तृपुरादि-प्रत्यन्त-नृपति-भिर्म्मालवार्जुनायन-यौधेय-माद्रकाभीर-प्रार्जुन-सनकानीक-काक-खरपरिकादिभिश्च सर्व्व-कर-दानाज्ञाकरण-प्रणामागमन-

२३. परितोषित-प्रचण्ड-शासनस्य अनेक-भ्रष्ट-राज्योत्सन्न-राजवंश-प्रतिष्ठापनोद्भूत-निखिल-भु[व]न-[विचरण]-शान्त-यशसः दैवपुत्र-षाहि-षाहानुषाहि-शकमुरुण्डैः सैंहलकादिभिश्च

२४. सर्व्व-द्वीप-वासिभिरात्म-निवेदन-कन्योपायन-दान-गरुत्मदङ्क-स्वविषयभुक्ति-शासन-[य]ाचनाद्युपाय-सेवा-कृत-बाहु-वीर्य्य-प्रसर-धरणि-बन्धस्य प्रि(पृ)थिव्यामप्रतिरथस्य

२५. सुचरित - शतालङ्कृतानेक - गुण - गणोत्सिक्तिभिश्चरण - तल-प्रमृष्टान्य-नरपति-कीर्त्तेः साध्व्‌वसाधूदय-प्रलय-हेतु-पुरुषस्याचिन्त्यस्य भक्त्यवनति-मात्र-ग्राह्य-मृदुहृदयस्यानुकम्पावतो (ऽ*) नेक-गो-शतसहस्र-प्रदायिन[:]

२६. कृपण-दीनानाथातुर-जनोद्धरण-सत्त्रदीक्षाद्युपगत-मनसः समिद्धस्य विग्रहवतो लोकानुग्रहस्य धनद-वरुणेन्द्रान्तक-समस्य स्व-भुज-बल-विजितानेक-नरपति-विभव-प्रत्यर्प्पणा-नित्य-व्यापृतायुक्त-पुरुषस्य

२७. निशित-विदग्ध-मति-गान्धर्व्व-ललितैर्व्व्रीडित-त्रिदशपतिगुरु-तुम्बुरु-नारदादेर्व्विद्वज्जनोपजीव्यानेक-काव्य-क्रियाभिः प्रतिष्ठित-कवि-राज-शब्दस्य सुचिर-स्तोतव्यानेकाद्भुतोदार-चरितस्य

२८. लोकसमय-क्रियानुविधान-मात्र-मानुषस्य लोक-धाम्नो देवस्य महा-महाराज-श्री-गुप्त-प्रपौत्रस्य महाराज-श्री-घटोत्कच-पौत्रस्य महा-राजाधिराज-श्री-चन्द्रगुप्त-पुत्रस्य

२९. लिच्छवि-दौहित्रस्य महादेव्यां कुमारदेव्यामुत्क(त्प)न्नस्य महा-राजाधिराज-श्री-समुद्रगुप्तस्य सर्व्व-पृथिवी-विजय-जनितोदय-व्याप्त-निखिलावनि-तलां कीर्त्तिमितस्त्रिदशपति-

३०. भवन-गमनावाप्त-ललित-सुख-विचरणामाचक्षाण इव भुवो बाहु-रयमुच्छ्रितः स्तम्भः [।*] यस्य । प्रदान-भुज-विक्रम-प्रशम-शास्त्र-वाक्योदयैरुपर्य्युपरि-सञ्चयोच्छ्रितमनेक-मार्ग्गं यशः [।*]

३१. पुनाति भुवन-त्रयं पशुपतेर्ज्जटान्तर्गुहा-निरोध-परिमोक्ष-शीघ्र-मिव पाण्डु गाङ्गं [पयः] [।।] [९] एतच्च काव्यमेषामेव भट्टा-रक-पादानां दासस्य समीप-परिसर्प्पणानुग्रहोन्मीलित-मतेः

३२. खाद्यटपाकिकस्य महादण्डनायक-ध्रुवभूति-पुत्रस्य सान्धिविग्र-हिक-कुमारामात्य-म[हादण्डनाय]क-हरिषेणस्य सर्व्व-भत-हित-सुखायास्तु । (।।)

३३. अनुष्ठितं च परमभट्टारक-पादानुध्यातेन महादण्डनायक-तिल-भट्टकेन

---

## MATHURA STONE PILLAR INSCRIPTION OF CHANDRAGUPTA II (G. S. 61)

**Provenance**—Chandul Mandul Bagichi at Mathura.

**Published in**—*D. R. Bhandarkar*, Ep. Ind., XXI, pp. 8 ff. ; *D. C. Sircar*, Select Inscriptions, p. 269 ff.

**Language**—Sanskrit with Prakrit influence.

**Script**—N. Brahmi resembling Kushana script of about second century A. D.

**Object**—Installation of the images of उपमितेश्वर and कपिलेश्वर each with a lingam on the head, by Uditacharya.

१. सिद्धम् [।*] भट्टारक-महाराज-[राजाधि]राज-श्री-समुद्रगुप्त-स-

२. [त्पु]त्रस्य भट्टारक-म[हाराज-राजाधि]राज-श्री-चन्द्रगुप्त-

३. स्य विज[य*]-राज्य-संवत्स[रे* पं]चमे [५] कालानुवर्त्तमान-सं-

४. वत्सरे एकषष्ठे (°षष्टितमे) ६० १ [आषाढ मासे ? प्र]थमे शुक्ल-दिवसे पं-

५. चम्यां (पंचमे) [।*] अस्यां पूर्व्वा[यां भ]गव[त्कु]शिकाद्दशमेन भगव-

६. त्पराशराच्चतुर्थेन [भगवत्क*]पि[ल]विमल-शि-

७. ष्य-शिष्येण भगव[दुपमित*]विमल-शिष्येण

८. आर्य्योदि[ता]चार्य्ये[ण] [स्व]-पु[ण्या]प्यायन-निमित्तं

९. गुरूणां च कीर्त्य[र्थमुपमितेश्व]र-कपिलेश्वरौ

१०. गुर्व्वायतने गुरु-[प्रतिमा-युतौ ?] प्रतिष्ठापितो(तौ) [।*] नै-

११. तत्ख्यात्यर्थमभिलि[ख्यते] [।*] [अथ*] माहेश्वराणां वि-

१२. ज्ञप्ति ⌣ क्रियते सम्बोधनं च [।*] यथाका[ले]नाचार्या-

१३. णां परिग्रहमिति (परिग्रह इति) मत्वा विशङ्क(ङ्कं) [पू]जा-पुर-

१४. स्कार(रं) परिग्रह-परिपाल्यं [कुर्य्या]दिति (कुर्य्युरिति) विज्ञप्ति-रिति [।*]

१५. यश्च कीर्त्यभिद्रोहं कुर्य्य[ा]द्य[श्चा]भिलिखित[मुप]र्य्यधो

१६. वा [स] पंचभिर्महा[ा*]पातकैरुपपातकैश्च संयुक्तस्स्यात् [।*]

१७. जयति च भगवा[ण्ड(न्द)ण्डः] रुद्रदण्डो [ऽ*]ग्र-[ना]यको नित्य[म्*] [।।*]

---

## SANCHI RAILING STONE INSCRIPTION OF CHANDRAGUPTA II

### The year 93

**Site**—Sanchi-stupa, called काकनादबोट in the inscription, Bhopal, Madya Pradesha.

**Published in**—*Fleet*, Corp. Insc. Ind., Vol. III, No. 5.

**Language**—Sanskrit.

**Script**—Southern Brahmi.

**Object**—Grant of a village, or an allotment of land ईश्वरवासक and a sum of money in Dinaras to Arya-Sangha by Amrakarddava, son of Undana, an officer of Chandragupta II.

१. सिद्धम् [।।*] का[कना]दबोट-श्री-महाविहारे शील-समाधि-प्रज्ञा-गुण-भावितेन्द्रियाय परम-पुण्य-

२. क्ु···ताय चतुर्द्दिगस्यागताय श्रमण-पुङ्गवावसथायार्य्य-संघाय महाराजाधि-

३. रा[ज-श्री]-चन्द्रगुप्त-पादानुध्यायित-जीवित-साधनः अनुजीवि-सत्पुरुष-सद्भाव-

४. वृ[त्ति ?] जगति प्रख्यापयन् अनेक-समरावाप्त-विजय-यशस्पताकः सुकुलि-देश-न-

५. ष्टी········ वास्तव्य उन्दान-पुत्राम्रकार्द्दवो मज-शरभङ्गाम्ररात-राजकुल-मूल्य-क्री-

६. तम् (?)·········य·· ईश्वरवासकं पञ्च-मण्डल्या(ल्यां) प्रणि-पत्य ददाति पञ्च-विंशतिश्च(ञ्च) दीना-

७. रान् [।।*] त[द्द]त्त···········यदर्द्धेन महाराजाधिराज-श्री-चन्द्र-गुप्तस्य देवराज इति प्रि-

८. य-नाम[धेयस्य] तस्य सर्व्व-गुण-संपत्तये यावच्चन्द्रादित्यौ तावत्पञ्च भिक्षवो भुंज-

९. तां रत्न-गृहे [च दी]पको ज्वलतु [।*] मम चापरार्द्धात्पञ्चैव भिक्षवो भुंजतां रत्न-गृहे च

१०. दीपक इति [।।*] तदेतत्प्रवृत्तं य उच्छिन्द्यात्स गो-ब्रह्म-हत्यया संयुक्तो भवेत्पञ्चभिश्चान-

११. न्तर्य्यैरिति [।।*] सं ९० ३ भाद्र-पद दि ४ [।।*]

---

## UDAYAGIRI CAVE INSCRIPTION OF CHANDRAGUPTA II

**Site**—On the back wall of a cave at उदयगिरि in मध्यप्रदेश.

**Published in**—*Fleet*, Corp. Ins. Ind., Vol. III, No. 6.

**Language**—Sanskrit verse.

**Script**—Northern Brahmi.

**Metre**—अनुष्टुभ्

**Object**—Excavation of the cave temple of Siva at the order of Virasena, called Saba, of Pataliputra. He was a minister of Chandragupta II, who came along with the king himself to Udayagiri.

१. सिद्धम् [।।*] य[द]न्तर्ज्योतिरर्क्काभमुर्व्यामि[– – ⏑ – ⏑ – – – – – ⏑ – ]व्याप्ति चन्द्रगुप्ताख्यमद्भुतम् [।।*] १

२. विक्रमावक्रय-क्रीता दास्य-न्यग्भूत-पार्त्थिव[ा] [– – –] मान-संरक्त-धर्म्म[– – ⏑ – ⏑ –] [।।*] २

३. तस्य राजाधिराजर्षेरचिन्त्यो [– ⏑ –]र्म्मणः अन्वय-प्राप्त-साचिव्यो व्या[पृत-सन्धि]-विग्रहः [।।*] ३

४. कौत्सश्शाब इति ख्यातो वीरसेनः कुलाख्यया शब्दार्त्थ-न्याय-लोकज्ञ ⏜ कवि ⏜ पाटलिपुत्रकः [।।*] ४

५. कृत्स्न-पृथ्वी-जयार्त्थेन राज्ञैवेह सहागतः भक्त्या भगवतश्शम्भो-र्गुहामेतामकारयत् [।।*] ५

---

## MEHARAULI IRON PILLAR INSCRIPTION OF CHANDRA

**Site**—Meharauli, near Delhi. Corruption of मिहिरपुरी.

**Published in**—*Fleet*, Corp. Ins. Ind., Vol. III, pp. 141 ff.; JAHRS, Vol. X, p. 86 ff. ; *D. C. Sircar*, JRASBL, Vol. V, pp. 407, ff., and Select Inscriptions, pp. 275 ff.

**Language**—Sanskrit verse.

**Script**—Northern Brahmi of 5th cent. A. D.

**Metre**—शार्दूल-विक्रीडित.

**Object**—Erection of the iron pillar, called the ध्वज of god Vishnu on a hill called विष्णुपद. Also records the glory and conquests of king Chandra.

१. यस्योद्वर्त्तयतः प्रतीपमुरसा शत्रून्समेत्यागतान्वङ्गेष्वाहव-वर्त्तिनो [ऽ*]भिलिखिता खड्गेन कीर्त्तिर्भुजे

२. तीर्त्वा सप्त मुखानि येन समरे सिन्धोर्ज्जिता वाह्लिका यस्याद्याप्यधिवास्यते जलनिधिर्व्वीर्य्यानिलैर्द्दक्षिणः [।।*]

३. खिन्नस्येव विसृज्य गां नरपतेर्ग्गामाश्रितस्येतरां मूर्त्या (र्त्त्या) कर्म्मजितावनिं गतवतः कीर्त्या (र्त्त्या) स्थितस्य क्षितौ

४. शान्तस्येव महावने हुतभुजो यस्य प्रतापो महान्नाद्याप्युत्सृजति प्रणाशित-रिपोर्य्यत्नस्य शेषः क्षितिम् [।।*]

५. प्राप्तेन स्व-भुजार्ज्जितं च सुचिरञ्चैकाधिराज्यं क्षितौ चन्द्राह्वेन समग्र-चन्द्र-सदृशीं वक्त्र-श्रियं बिभ्रता

६. तेनायं प्रणिधाय भूमि-पतिना भावेन विष्णो(ष्णौ) मतिं प्रांशुर्व्विष्णुपदे गिरौ भगवतो विष्णोर्ध्वजः स्थापितः [।।*]

---

## ERAN STONE INSCRIPTION OF SAMUDRAGUPTA

**Prov enance**—The red-sandstone squared block on which the inscription is inscribed was found near a ruined temple of Varaha in Eran, the ancient Airikina, a village on the left bank of the Bina, in Sagar District, Madhya Pradesha. Now in the Calcutta Museum.

**Published in**—*Fleet*, Corp. Insc. Ind., Vol. III, No. 2, p, 18 ff.

**Language**—Sanskrit verse. First six lines broken away and lost. End also is lost.

**Script**—Southern Brahmi. Cf. Udayagiri Cave Insc. of Chandragupta II, the year 82.

**Metre**—वसन्त-तिलका throughout.

**Object**—Erection of some monument of which the stone was either a portion or the separate record. From appearance the stone is part of a temple, probably that of Vishnu, that lies in ruins to the north of the Varaha temple.

७. [– – ⏑ – ⏑ ⏑ ⏑ – – ⏑] सुवर्ण्ण-दाने
८. [न्यक्का]रिता नृपतयः पृथु-राघवाद्याः [।।*] २
९. [राजा] बभूव धनदान्तक-तुष्टि-कोप-तुल्यः
१०. [⏑ – ⏑]म-नयेन समुद्रगुप्तः [।*]
११. [– –]न्य पार्त्थिव-गणस्सकलः पृथिव्याम्
१२. [– –]स्त(स्व ?)-राज्य-विभव-द्ध्रुतमास्थितो [ऽ*]भूत् [*] ३
१३. [– –]न भक्ति-नय-विक्क्रम-तोषितेन
१४. [यो] राज-शब्द-विभवैरभिषेचनाद्यैः [।*]
१५. [– –]नितः परम-तुष्टि-पुरस्कृतेन
१६. [– – ⏑]वो नृपैरप्रतिवार्य्य-वीर्य्यः [।।*] ४
१७. [श्रीर]स्य पुरुष-पराक्क्रम-दत्त-शुल्का
१८. [हस्त्य]श्व-रत्न-धन-धान्य-समृद्धि-युक्ता [।*]
१९. [नित्य]ङ्गृहेषु मुदिता बहु-पुत्र-पौत्र-
२०. [स]ङ्क्रामिणी कुल-वधु[धूः] व्रतिनी निविष्टा [।।*] ५

२१. [यस्य]र्ज्जितं समर-कर्म्म पराक्क्रमेद्ध
२२. [दीप्तं] यशः सु-विपुलस्परिबम्भ्रमीति [।*]
२३. [कर्म्मा]णि यस्य रिपवश्च रणोर्ज्जितानि
२४. [स्व]प्नान्तरेष्वपि विचिन्त्य परित्रसन्ति [।।*] ६
२५. [--⏑-⏑⏑⏑⏑⏑-⏑⏑⏑-⏑--] [-]प्तः(?) स्व-
भोग-नगरैरिकिरण-प्रदेशे [।*]
२६. [--⏑-⏑⏑⏑⏑⏑-⏑⏑⏑-⏑--] [सं]स्थापितस्स्व-
यशसः परिबृङ्हन(ण)ार्त्थम् [।।*] ७
२७. [--⏑-⏑⏑⏑⏑⏑-⏑⏑⏑-⏑--] [--⏑]वो नृपति-
राह यदा [⏑--] [।*]

---

## BILSAD STONE PILLAR INSCRIPTION OF KUMARAGUPTA

### The year 96

**Site**—Village Bilsad, Distt. Etawah, U.P. There are two pairs of columns. The inscription is on the eastern side of northern column of the west pair.

**Published in**—*Cunningham*, Arch. Sur. Ind., Vol. XI, p. 19 ff. ; *Fleet*, Corp. Ins. Ind., Vol. III, No. 10, p. 42 ff.

**Language**—Sanskrit, partly prose and partly verse.

**Script**—Northern Brahmi with very marked *matras* or prolonged horizontal strokes of the letters.

**Metres**—स्रग्धरा १ ; शादू्र्ल-विक्रीडित २.

**Obejct**—The accomplishment by a certain Dhruvasarman, at a temple of god Karttikeya under the name of Swami-Mahasena, of certain works, viz., (1) building of a gateway with a flight of steps (*pratoli*), (2) the establishment of a *Sattra*, or charitable hall or almshouse and (3) the erection of the column with the inscription to record these acts.

१. [सिद्धम् ।।] [सर्व्व-राजोच्छेत्तुः पृथिव्यामप्रतिरथस्य चतुरुद]धि-सलिलास्वादित-यशसो

२. [धनद-वरुणेन्द्रान्तक-समस्य कृतान्त-परशोः न्यायागतानेक-गो-हि]रण्य-कोटि-प्रदस्य चिरोत्सन्नाश्वमेधाहर्त्तुः

३. [महाराज-श्री-गुप्त-प्रपौत्रस्य महाराज-श्री-घटोत्कच-पौत्रस्य म]हाराजाधिराज-श्री-चन्द्रगुप्त-पुत्रस्य

४. लिच्छवि-दौहि[त्रस्य महादेव्यां कुमारदेव्यामुत्पन्नस्य महारा]-जाधिराज-श्री-समुद्रगुप्त[स्य*] पुत्रस्य

५. महादेव्यां दत्तदेव्यामुत्पन्नस्य स्वय[मप्रतिरथस्य परम]-भागवतस्य महाराजाधिराज-श्री-चन्द्रगुप्त[स्य*] पुत्रस्य

६. महादेव्यां ध्रुवदेव्यामुत्पन्नस्य महाराजाधिराज-श्री-कुमार-गुप्तस्याभिवर्द्धमान-विजय-राज्य(ज्ये) संवत्सरे षण्णवते [।*]

७. अस्यान्दिवस-पूर्व्वायां [तिथौ*] भगवतस्त्रैलोक्य-तेजस्संभार-संतताद्भुत-मूर्त्तेर्ब्रह्मण्य-देवस्य

८. .........निवासिनः स्वामि-महासेनस्यायतने [ऽ*]स्मिन्कार्त्त-युगाचार-सद्धर्म्म-वर्त्मानुयायिना ।

९. [र ?]ात..........[प]र्षदा मानितेन ध्रुवशर्म्मणा कर्म्म महत्कृते (त)[मि*]दम् । (।।)

१०. कृ[त्व]ा [– –ा]भिरामां मुनिवसति-[⏑ –] स्वर्ग-सोपान-[रू]पाम् । कौबेर-च्छन्द-बिम्बां स्फटिक-मणि-दलाभास-गौरां-(रीं) प्रतोलीम् ।

११, प्रासादाग्राभिरूपं गुण-वर-भवनं [धर्म्म-स]त्रं यथावत् । पुण्येष्वे-वाभिरामं व्रजति शुभ-मतिस्तात-शर्म्मा ध्रुवो [ऽ*]स्तु । (।।)

१२. [–]ा[–]ो [–]स्य [⏑ –]शुभामृत-वर-प्रख्यात-लब्धा भुवि । [–̀] [–̀] भक्तिरहीन-सत्व(त्त्व)-समता कस्तं न सं-पूजयेत् ।

१३. येनापूर्व्व-विभूति-सञ्चय-चयैः [–̆] [f–] [⏑——⏑–]: ।
तेनायं ध्रुवशर्म्मणा स्थिर-वर[स्स्तं]भो[च्छ्र]यः कारितः । (॥)

---

## UDAYAGIRI CAVE INSCRIPTION
### of the time of Kumaragupta
### The year 106

**Site**—Inside a cave temple at Udayagiri, in Isagarh District, Madhya Pradesa.

**Published in**—*Cunningham*, Arch. Sur. Ind., Vol. X, p. 53 f.; *Hultzsch*, Ind. Ant. XI, p. 309 f.; *Fleet*, Corp. Ins. Ind., Vol. III, No. 61, p. 258 f.

**Language**—Sanskrit verse, except the opening invocation.

**Script**—Northern Brahmi.

**Meres**—इन्द्र-वज्रा 1, 3; रुचिरा 2; वंशस्थ 4; उपेन्द्र-वज्रा 5.

**Object**—Jain inscription recording the installation of the image of the तीर्थंकर पार्श्व or पार्श्वनाथ at the mouth of the cave.

१. नमः सिद्धेभ्यः [॥*] श्री-संयुतानां गुण-तोयधीनां गुप्तान्वयानां नृप-सत्तमानां

२. राज्ये कुलस्याभिविवर्द्धमाने षड्भिर्य्युते वर्ष-शते [ऽ*]थ मासे [॥१॥] सु-कार्त्तिके बहुल-दिने [ऽ*]थ पंचमे

३. गुहा-मुखे स्फट-विकटोत्कटामिमां [।*] जित-द्विषो जिन-वर-पार्श्व-संज्ञिकं जिनाकृतिं शम-दमवान-

४. चीकरत् [॥२*॥] आचार्य्य-भद्रान्वय-भूषणस्य शिष्यो ह्यसा-वार्य्य-कुलोद्गतस्य [।*] आचार्य्य-गोश-

५. र्म्म-मुनेस्सुतस्तु पद्मावतावश्वपतेर्भटस्य [॥३*॥] परैरजेयस्य रिपुघ्न-मानिनस्स सङ्घि-

६. लस्येत्यभिविश्रुतो भुवि [।*] स्व-संज्ञया शङ्कर-नाम-शब्दितो विधान-युक्तं यति-मा-

७- र्ग्गमास्थितः [॥४॥*] स उत्ताराणां सदृशे कुरूणां उदग्दिशा-देश-वरे प्रसूतः [।*]

८. क्षयाय कर्म्मारि-गणस्य धीमान् यदत्र पुण्यं तदपाससर्ज्ज [॥५॥*]

---

## DAMODARPUR COPPER-PLATE INSCRIPTION

### of the time of KUMARAGUPTA I

Gupta year 124 (A. D. 444)

**Provenance**—Damodarapur, Dinajpur Distt., Bengal.

**Published in**— *R. G. Basak*, Ep. Ind., Vol. XV, p. 130 f. ; *D. C. Sircar*, Select Inscriptions, p. 283 f.

**Language**—Sanskrit prose except the last imprecatory verse.

**Script**—Northern Brahmi.

**Metre**—अनुष्टुभ् 1.

**Object**—Grant of land for service in regard to the maintenance of sacred fire.

*First Side*

१. सम्व(संव)[त्सरे*] १०० २ ४ फाल्गुण (न)-दि ७ परमदैवत-परमभट्टारक-महाराज[ा*]-

२. धिराज-श्री-कुमारगुप्ते पृथिवी-पतौ तत्पाद-परिगृहीते पुण्ड्र-वर्द्ध[न*]-

३. भुक्तादु(वु)परिक-चिरातदते(त्ते)नानुवल(ह)वा(मा)नक-कोटि-वर्ष-विषये च त-

४. न्नियुक्तक-कुमारामात्य-वेत्रवर्मन्य(ण्य)धिष्ठाणा(ना)धिकरणञ्च नगर-श्रेष्ठि-

५. धृतिपाल-सार्त्थवाह-व(ब)न्धुमित्र-प्रथम-कुलिक-धृतिमित्र-प्रथम-का[य*]-

६. स्थ-शाम्बपाल-पुरोगे संव्यवहरति यतः ब्राह्मण-कर्प्पटिकेण(न)

७. विज्ञापित (तं) अरर्हथ (अर्हथ) ममाग्निहोत्रोपयोगाय अप्रदा-
[ऽ*]प्रहत-खि-

८. ल-क्षेत्र (त्रं) त्र (त्रै) दीनारिक्य-कुल्यवापेण (न) शश्वता (दा)-
चंद्रार्क्क-तारक-भोज्ये (ग्य) [त*]-

*Second Side*

९. या-नीवी-धर्म्मेण दातुमिति एवं दीयतामित्युत्पन्ने त्रिनी (त्रीणि)
दीना[राण्यु*]-

१०. पसंगृह्य यतः पुस्तपाल-रिशि (ऋषि) दत्त-जयनन्दि-विभुदत्ताना-
मवधा-

११. रणया डोङ्गाया उत्तर-पश्चिण (मो) द्देशे कुल्यवापमेकम् (कं)
दत्तम् [।।*]

१२. स्व-दत्तां पर-दत्ताम्बा (-दत्तां वा) यो हरेत वसुन्धरां [।*] भूमि-
[दान]-संबद्धा[:*] श्लोका भवन्ति [।*]

१३. स विष्ठायां क्रि (कृ) मिर्भूत्वा पित्रि (तृ) भि[:*] सह पच्यते
[इ*]ति [।।१।।*]

---

## DAMODARPUR COPPER-PLATE INSCRIPTON

### of the time of KUMARAGUPTA I

Gupta year 128 (A D. 447)

**Provenance**—Damodarpur, Dinajpur Distt., Bengal.

**Published in**—*R. G. Basak*, Ep. Ind., Vol. XV, p. 133 f ; *K. N. Dikshit*, Ep. Ind. XVII, p. 193, *D. C. Sircar*, Select Inscriptions, p. 285 f.

**Language**—Sanskrit.

**Script**—Northern Brahmi.

**Metre**—अनुष्टुभ् 1, 2.

**Object**—Grant of land for the purpose of performing five great sacrifices (पञ्चमहायज्ञ).

*First Side*

१. स(सं) १०० २० ८ वैशाख-दि १० ३ पर[मदैव]त-परम-भट्टारक-महाराजाधिराज-[श्री-कुमा]-

२. रगुप्ते पृथिवी-पतौ [तत्पाद]-परिगृहीतस्य पु[ण्ड्र]वर्द्धन-भुक्तावुप-[रिक-चि]रातदत्त[स्य]

३. भोगेना[नुव]ह[मानक]-कोटिव[र्ष]-विषये तन्नियुक्तक-कु[मा]रा-मात्य-वे[त्र]-

४. वर्म्मणि अधिष्ठाना[धिक]र[णञ्च] नगर-[श्रे]ष्ठि-धृतिपाल-सार्थ-वा[ह-बन्धुमि]त्र-प्र[थ]-

५. म-कुलिक-धृतिमित्र-[प्रथ]म-कायस्थ-[शाम्ब]पाल-पुरो[गे] सम्व्य-(संव्य)व[हर]ति [यतः*]स······

६. विज्ञापितं(तम्) अ[र्हं]थ मम प[ञ्च]-महायज्ञ-प्रवर्त्तनायानुवृत्ता-प्रदाक्षय-नि(नी)[वी*]-

७. मर्य्यादया दातुमिति एताद्विज्ञाप्यमुपलभ्य पुस्तपा[ल]-रिसिदत्त-(ऋषि)दत्त-जयन[न्दि-विभुदत्तानामव]-

८. धारणया दीयतामित्यु[त्प]न्ने एतस्माद्य[था]नुवृत्त-त्रैदी-नारि[क्य-कु]ल्यावापे[न]

*Second Side*

९. [द्व]यमुप[संगृ]ह्य [ऐरा]वता[गो]-राज्ये पश्चिम(म)-दिशि पञ्च-द्रो[णा]-

१०. [त्म]काः [भूमयः*] ह[ट्ट]-पानकैश्च सहितेति (सहिता इति) दत्ताः [।*] तदुत्तर-कालं सम्व्य(संव्य)वहारिभिः [धर्म्ममवेक्ष्या-नु[म]-

११. न्तव्याः [।*] अपि च भूमि-दान-सम्व(संब)द्धामि(वि)मौ श्लोकौ भवतः [।*] पूर्व-दत्तां द्विजाति[भ्यो]

१३. यत्नाद्रक्ष युधिष्ठिर [।*] महीं महीव(म)तां श्रेष्ठ दानाच्छ्रेयो [ऽ*]नुपा[ल]नं [।।१।।*] बहुर्व्विसुधा दत्ता दी[य]ते च

१३. पुनः पुनः [।*] यस्य यस्य यदा भूमिस्तस्य तस्य तदा फल-मिति [।।२।।*]

---

## MANKUWAR BUDDHIST STONE-IMAGE INSCRIPTION CF KUMARAGUPTA I

Gupta year 129 (A. D. 448)

**Provenance**—Mankuwar, a village on the Yamuna, Distt. Allahabad. The inscription is on the front of the pedestal of the image of the Buddha.

**Published in**—*Fleet*, Corp. Insc. Ind. Vol. III, p. 46 f.; *D. C. Sircar*, Select Inscriptions, p. 287 f.; *Bhandarkar's* list, No. 1273.

**Language**—Sanskrit with Prakrit influence,

**Script**—Northern Brahmi.

**Object**—Installation of the image of the Buddha by the monk Buddhamitra.

१. १ँ (=सिद्धम् ।) नमो बुधान (=बुद्धानाम्) [।*] भगवतो(तः) सम्यक्सम्बुद्धस्य स्व-मताविरुद्धस्य इयं प्रतिमा प्रतिष्ठापिता भिक्षु-बुद्धिमित्रेण [।*]

२. सम्वत्(संवत्) १०० २० ६ महाराज-श्री-कुमारगुप्तस्य राज्ये ज्येष्ठ-मास-दि १० ८ सर्व-दुःक्ख(ख)-प्रहाना(णा)र्त्थम् [।।*]

---

# JUNAGARH (GIRNAR) ROCK INSCRIPTION OF SKANDAGUPTA

The years 136, 137, and 138.

**Site**—Girnar mountain in Junagarh in Kathiawad. The inscription is on the north-west face of a large granite boulder, containing also 14 Asoka edicts and an inscription of महाक्षत्रप रुद्रदामन्.

**Published in**—*Bhau Daji*, JRAS, Bom. Br. Vol. VII. p. 121 ff.; *Fleet*, Corp. Insc. Ind., Vol. III, No. 14, p. 56 ff.; *D. C. Sircar*, Select Inscriptions, pp. 299 ff.

**Language**—Sanskrit verse; except for सिद्धम् and a few words in l. 23.

**Script**—Southern Brahmi of 5th cent. A. D.

**Metre**—मालिनी, 1, 2. 3, 38, 39 ; आर्या 4, 45 ; उपजाति 5, 13—15, 17—20, 22, 32, 34—37 ; इन्द्र-वज्रा, 6—12, 21, 23—25, 27, 33, 41, 42 ; वैतालीयौपच्छन्दसिक 16, ; वंशस्थ 26, 28—31, 40 ; वसन्त-तिलका 43, 44, 46, 47.

**Object**—Restoration of the break in Sudarsana lake, by renewing the embankment, under the orders of *Chakrapalita*, son of *Parnadatta*, the governer of the city.

*PART I*

१. सिद्धम् [।।*] श्रियमभिमत-भोग्यां नैक-कालापनीतां त्रिदश-पति-सुखार्त्थं यो बलेराजहार । कमल-निलयनायाः शाश्वतं धाम लक्ष्म्याः

२. स जयति विजितार्त्तिर्व्विष्णुरत्यन्त-जिष्णुः ।।[१*] तदनु जयति शश्वत् श्री-परिक्षिप्त-वक्षाः स्व-भुज-जनित-वीर्यो राजराजाधि-राजः । नरपति-

३. भुजगानां मान-दर्प्पोत्फणानां प्रतिकृति-गरुडा[ज्ञां] निर्व्विषी(षीं) चावकर्त्ता ।।[२*] नृपति-गुण-निकेतः स्कन्दगुप्तः पृथु-श्रीः चतुरु-[दधि-जला]न्तां स्फीत-पर्यन्त-देशाम् ।

४. अवनिमवनतारिर्यः चकारात्म-संस्थां पितरि सुर-सखित्वं प्राप्त-वत्यात्म-शक्त्या ।।[३*] अपि च जित[मे]व तेन प्रथयन्ति यशांसि

यस्य रिपवो [ऽ*]पि [।*] आमूल-भग्न-दर्प्पा नि[र्वचना ?
म्लेच्छ-देशेषु] ॥[४*]

५. क्रमेण बुद्धया निपुणं प्रधार्य ध्यात्वा च कृत्स्नान्गुण-दोष-हेतून् ।
व्यपेत्य सर्वान्मनुजेन्द्र-पुत्रांल्लक्ष्मीः स्वयं यं वरयांचकार ॥[५*]
तस्मिन्नृपे शासति नैव कश्चिद्धर्म्मादपेतो मनुजः प्रजासु ।

६. आर्त्तो दरिद्रो व्यसनी कदर्यो दण्डो(ण्डयो) न वा यो भृश-
पीडितः स्यात् ॥[६*] एवं स जित्वा पृथिवीं समग्रां भग्नाग्र-
दर्पा[न्] द्विषतश्च कृत्वा । सर्व्वेषु देशेषु विधाय गोप्तृ(प्तृ)न्
संचिन्तया[मा]स बहु-प्रकारम् ॥[७*] स्यात्को [ऽ*]नुरूपो

७. मतिमान्विनि(नी)तो मेधा-स्मृतिभ्यामनपेत-भावः । सत्यार्ज-
वौदार्य-नयोपपन्नो माधुर्य-दाक्षिण्य-यशो-[ऽ*]न्वितश्च ॥[८*]
भक्तो [ऽ*]नुरक्तो नृ-[विशे]ष-युक्तः सर्व्वोपधाभिश्च विशुद्ध-बुद्धिः ।
आनृण्य-भावोपगतान्तरात्माः(त्मा) सर्व्वस्य लोकस्य हिते
प्रवृत्तः ॥[९*]

८. न्यायार्जने [ऽ*]र्थस्य च कः समर्थः स्यादर्जितस्याप्यथ रक्षणे च ।
गोपायितस्यापि [च] वृद्धि-हेतौ वृद्धस्य पात्र-प्रतिपादनाय ॥[१०*]
सर्व्वेषु भृत्येष्वपि संहतेषु यो मे प्रशिष्यान्निखिलान्सुराष्ट्रान् । आं
ज्ञातमेकः खलु पर्णदत्तो भारस्य तस्योद्वहने समर्थः ॥[११*]

९. एवं विनिश्चित्य नृपाधिपेन नैकानहो-रात्र-गणान्स्व-मत्या । यः
संनियुक्तो [ऽ*]र्थनया कथंचित् सम्यक्सुराष्ट्रावनिपाल-
नाय ॥[१२*] नियुज्य देवा वरुणं प्रतीच्यां स्वस्था यथा नोन्म-
नसो बभूवु[:] [।*] पूर्व्वेतरस्यां दिशि पर्णदत्तं नियुज्य राजा
धृतिमांस्तथा [ऽ*]भूत् ॥[१३*]

१०. तस्यात्मजो ह्यात्मज-भाव-युक्तो द्विधेव चात्मात्म-वशेन नीतः ।
सर्व्वात्मना [ऽऽ*]त्मेव च रक्षणीयो नित्यात्मवानात्मज-कान्त-
रूपः ।(।।)[१४*] रूपानुरूपैर्ललितैर्विचित्रैः नित्य-प्रमोदान्वित-

सर्व-भावः । प्रबुद्ध-पद्माकर-पद्म-वक्त्रो नृणां शरण्यः शरणागता-नाम् । ।।[१५*]

११. अभवद्भुवि चक्रपालितो [ऽ*]साविति नाम्ना प्रथितः प्रियो जनस्य । स्व-गुणैरनुपस्कृतैरुदा[त्तैः]: पितरं यश्च विशेषयांच-कार । (।।)[१६*] क्षमा प्रभुत्वं विनयो नयश्च शौर्यं विना शौर्य-मह[ा ?]र्च्चनं च । दाक्ष्यं (?) दमो दानमदीनता च दाक्षिण्यमानृण्यम[शू]न्यता च । (।।)[१७*] सौंदर्यमार्येतर-निग्रहश्च अ-विस्मयो धैर्यमुदीर्णता च ।

१२. इत्येवमेते [ऽ*]तिशयेन यस्मिन्नविप्रवासेन गुणा वसन्ति । (।।) [१८*] न विद्यते [ऽ*]सौ सकले [ऽ*]पि लोके यत्रोपमा तस्य गुणैः क्रियेत । स एव कात्स्न्र्येन गुणान्वितानां बभूव नृ(नृ)णा-मुपमान-भूतः । (।।)[१९*] इत्येवमेतानधिकानतो [ऽ*]न्या-न्गुणान्प[री]क्ष्य स्वयमेव पित्रा । यः संनियुक्तो नगरस्य रक्षां विशिष्य पूर्वान्प्रचकार सम्यक् । (।।)[२०*]

१३. आश्रित्य वि(वी)र्यं [स्वभु]ज-द्वयस्य स्वस्यैव नान्यस्य नरस्य दर्पं । नोद्वेजयामास च कंचिदेवमस्मिन्पुरे चैव शशास दुष्टाः(न्)। (।।)[२१*] विस्रंभमल्पे न शशाम यो [ऽ*]स्मि-न्काले न लोकेषु स-नागरेषु । यो लालयामास च पौर-वर्गान् [पितेव ?]-पुत्रान्सुपरीक्ष्य दोषान् ।(।।)[२२*] संरंज्यां च प्रकृतीर्बभूव पूर्व्व-स्मिताभाषण-मान-दानैः ।

१४. निर्यन्त्रणान्योन्य-गृह-प्रवेशै[:] संवर्द्धित-प्रीति-गृहोपचारैः । (।।) [२३*] ब्रह्मण्य-भावेन परेण युक्तः शुक्लः शुचिर्दान-परो यथा-वत् । प्राप्यान्स काले विषयान्सिषेवे धमार्थयोश्चा[प्य*]विरोध-नेन । (।।)[२४*] यो [ऽ*जायतास्मात्खलु?] पर्णदत्तात्स न्यायवा-नत्र किमस्ति चित्रं । मुक्ता-कलापाम्बुज-पद्म-शीताच्चन्द्रात्कि-मुष्णं भविता कदाचित् । (।।)[२५*]

१५. अथ क्रमेणाम्बुद-काल आग[ते नि]दाघ-कालं प्रविदार्य तोयदैः । ववर्ष तोयं बहु संततं चिरं सुदर्शनं येन बिभेद चात्वरात् ।

(।।)[२६] संवत्सराणामधिके शते तु त्रिंशद्भिरन्यैरपि षड्भि-रेव । रात्रौ दिने प्रौष्ठपदस्य षष्ठे गुप्त-प्रकाले गणनां विधाय । (।।)[२७*]

१६. इमाश्च या रैवतकाद्विनिर्गता[:*] पलाशिनीयं सिकता-विला-सिनी । समुद्रकान्ताः चिर-बन्धनोषिताः पुनः पतिं शास्त्र-यथो-चितं ययुः ।(।।)[२८*] अवेक्ष्य वर्षागम-जं महोद्भ्रमं महोदधे-रूर्जयता प्रियेप्सुना । अनेक-तीरान्तज-पुष्प-शोभितो

१७. नदीमयो हस्त इव प्रसारितः ।(।।)[२९*] विषाद्य[मानाः खलु सर्वतो ज]नाः कथं-कथं कार्यमिति प्रवादिनः । मिथो हि पूर्वापर-रात्रमुत्थिता विचिन्तयां चापि बभूवुरुत्सुकाः ।(।।)[३०] अपीह लोके सकले सुदर्शनं पुमां(मान्) हि दुर्दर्शनतां गतं(तः) क्षणात् ।

१८. भवेन्नु सो [ऽ*]म्भोनिधि-तुल्य-दर्शनं सुदर्शनं [–⏑⏑–⏑–⏑–] [।।३१*] [⏑–⏑–––⏑]वणे स भूत्वा पितुः परां भक्तिमपि प्रदर्श्य । धर्मं पुरोधाय शुभानुबन्धं राज्ञो हितार्थं नग-रस्य चैव ।(।।)[३२*] संवत्सराणामधिके शते तु

१९. त्रिंशद्भिरन्यैरपि सप्तभिश्च । [गुप्त-प्रकाले नय]-शास्त्रवेत्ता विश्वो [ऽ*]प्यनुज्ञात-महाप्रभावः ।(।।)[३३*] आज्य-प्रणामैः विबुधानथेष्ट्वा धनैर्द्विजातीनपि तर्पयित्वा । पौरांस्तथा [ऽ*]भ्यर्च्य यथार्ह-मानैः भृत्यांश्च पूज्यान्सुहृदश्च दानैः । (।।)[३४*]

२०. ग्रैष्मस्य मासस्य तु पूर्व-प[क्षे] [⏑–⏑––प्र]थमे [ऽ*]ह्नि सम्यक् । मासद्वयेनादरवान्स भूत्वा धनस्य कृत्वा व्ययमप्रमेयम् । (।।)[३५*] आयामतो हस्त-शतं समग्रं विस्तारतः षष्ठिरथापि चाष्टौ ।

२१. उत्सेधतो [ऽ*]न्यत् पुरुषाणि [सप्त ?⏑–⏑–ह]स्त-शत-द्वयस्य । (।।)[३६*] बबन्ध यत्नान्महता नृदेवान[भ्यर्च्य ?] सम्यग्घटितोपलेन । अ-जाति-दुष्टम्प्रथितं तटाकं सुदर्शनं शश्वत-कल्प-कालम् । (।।)[३७*]

२२. अपि च सुदृढ-सेतु-प्रान्त(?)-विन्यस्त-शोभ-रथचरण-समाह्व-क्रौंच-हंसास-धूतम् । विमल-सलिल[– – – ⌣ – – – ⌣ – –] भुवि त[⌣ ⌣ ⌣ – – –]द[ने] (ऽ*)र्कः शशी च ।(।।)[३८*]

२३. नगरमपि च भूयाद्वृद्धिमत्पौर-जुष्टं द्विज-बहु-शत-गीत-ब्रह्म-निर्नष्ट-पापं । शतमपि च समानामीति-दुर्भिक्ष[मुक्तं ⌣ ⌣ ⌣ ⌣ ⌣ ⌣ – – – – ⌣ – – ⌣ – –] [।।३९*] [इति सुद]र्शन-तटाक-संस्कार-ग्रन्थ-रचना [स]माप्ता ।।

*PART II*

२४. दृप्तारि-दर्प-प्रणुदः पृथु-श्रियः स्व-वङ्श-केतोः सकलावनी-पतेः । राजाधिराज्याद्भुत-पुण्य-[कर्मणः] [– – ⌣ – – ⌣ ⌣ – – ⌣ – – ⌣] [।।४०*] [– – ⌣ – – – ⌣ ⌣ – ⌣ – – – – ⌣ – – ⌣ ⌣ – ⌣ – –] [।] द्वीपस्य गोप्ता महतां च नेता दण्ड-स्थि[ता]नां

२५. द्विषतां दमाय । (।।)[४१*] तस्यात्मजेनात्म-गुणान्वितेन गोविन्द पादार्पित-जीवितेन । [– – ⌣ – – – ⌣ ⌣ – ⌣ – – – – ⌣ – – ⌣ ⌣ – ⌣ – –] [।।४२*] [– – ⌣ – ⌣ ⌣ ⌣ – ⌣ ⌣ – ⌣ –]ग्धं विष्णोश्च पाद-कमले समवाप्य तत्र । अर्थ-व्ययेन

२६. महता महता च कालेनात्म-प्रभाव-नत-पौर-जनेन तेन । (।।) [४३*] चक्रं बिर्भात रिपु [– ⌣ ⌣ – ⌣ – – – – ⌣ – ⌣ ⌣ ⌣ – ⌣ ⌣ – ⌣ – –][।] [– – ⌣ – ⌣ ⌣ ⌣ – ⌣ ⌣ – ⌣ – – –] तस्य स्व-तंत्र-विधि-कारण-मानुषस्य । (।।)[४४*]

२७. कारितमवक्र-मतिना चक्रभृतः चक्रपालितेन गृहं । वर्ष-शते [ऽ*]ष्टात्रिंशे गुप्तानां काल-[क्रम-गणिते] [।।४५*] [– – ⌣ – ⌣ ⌣ ⌣ – ⌣ ⌣ – ⌣ – – – – ⌣ ⌣ ⌣ ⌣ – ⌣ ⌣ – ⌣ – –[।*] [सा]र्थमुत्थितमिवोर्जयतो [ऽ*]चलस्य

२८. कुर्वत्प्रभुत्वमिव भाति पुरस्य मूर्ध्नि ॥[४६*] अन्यच्च मूर्द्धनि सु[‒ ‿ ‿ ‒ ‿ ‒ ‒ ‒ ‒ ‿ ‒ ‿ ‿ ‿ ‒ ‿ ‿ ‿ ‒ ‿ ‒ ‒ [।*] ‒ ‒ ‿ ‿ ‒ ‿ ‿ ‿ ‿ ]

२९. रुद्ध-विहंग-मार्गं विभ्राजते ‿ ‿ ‿ ‒ ‿ ‿ ‒ ‿ ‿ ‒ ‒ [॥४७*]

---

# KAHAUM STONE PILLAR INSCRIPTION OF SKANDAGUPTA

## Year 141

**Site**—Outside the village Kahaum, ancient कुकुभ-ग्राम of this inscription, in Deoriya Tehsil of Gorakhpur Distt., U.P.

**Published in**—*Fleet*, Corp. Insc. Ind., Vol. III, No. 15, p. 67 ; *D. C. Sircar*, Select Insc., pp. 308 f. ; *Bhandarkar's* list, 1278.

**Language**—Sanskrit verse, except सिद्धम्.

**Script**—Northern Brahmi; Cf. All. Pill. Insc. of Samudra Gupta.

**Metre**—शार्दूल-विक्रीडित.

**Object**—Setting up of five stone images of आदिकर्तृ's or तीर्थंकरs and the erection of the column by a certain Madra at the village, कुकुभ ग्राम.

१. सिद्धम् [॥*] यस्योपस्थान-भूमिर्नृपति-शत-शिरः-पात-वाता-वधूता

२. गुप्तानां वन्शजस्य प्रविसृत-यशसस्तस्य सर्व्वोत्तमर्द्धेः [।*]

३. राज्ये शक्रोपमस्य क्षितिप-शत-पतेः स्कन्दगुप्तस्य शान्ते

४. वर्षे त्रिन्शद्दशैकोत्तरक-शततमे ज्येष्ठ-मासि प्रपन्ने । (॥)[१*]

५. ख्याते [ऽ*]स्मिन्ग्राम-रत्ने कुकुभ इति जनैस्साधु-संसर्ग-पूते ।

६. पुत्रो यस्सोमिलस्य प्रचुर-गुण-निधेर्भट्टिसोमो महा[त्म]ा [।*]

७. तत्सूनू रुद्रसोम[ः*] पृथुल-मति-यशा व्याघ्र इत्यन्य-संज्ञो ।

८. मद्रस्तस्यात्मजो [ऽ*]भूद्द्विज-गुरु-यतिषु प्रायशः प्रीतिमान्यः । (॥)[२*]

९. पुण्य-स्कन्धं स चक्रे जगदिदमखिलं संसरद्वीक्ष्य भीतो

१०. श्रेयोर्त्थं भूत-भूत्यै पथि वि(नि)यमवतामर्हतामादिकतॄन् [।*]
११. पञ्चेन्द्रां(न्द्र)स्थापयित्वा धरणि-धरमयान्सन्निखातस्ततो[ऽ*]यम्
१२. शैल-स्तम्भः सुचारुर्गिरिवर-शिखराग्रोपमः कीर्त्ति-कर्त्ता [॥*][३*]

---

# INDORE COPPER-PLATE INSCRIPTION OF SKANDAGUPTA

## Year 146

**Provenance**—From a small stream at Indore, ancient इन्द्रपुर and इन्द्रापुर of this inscription, U.P.

**Published in**—*Fleet*, Corp. Insc. Ind., Vol. III, No. 16, p. 70 f. ; *Kielhorn*, Ind. Ant. XVIII, p. 219 ; *D. C. Sircar*, Select Insc., p. 309 ff, ; *Bhandarkar's* list, 1279.

**Language**—Sanskrit prose, opening invocation and last imprecation in verse.

**Script**—Northern Brahmi.

**Metres**—शार्दूल-विक्रीडित 1, इन्द्रवज्रा 2.

**Object**—A perpetual endowment by a Brahmana Devavishnu for maintaining a lamp in a temple of the sun at Indrapura.

१. सिद्धम् [॥*] यं विप्रा विधिवत्प्रबुद्ध-मनसो ध्यानैक-ताना(न)-स्तुवः(स्तवाः) यस्यान्तं त्रिदशासुरा न विविदुर्न्नोर्ध्वं न तिर्य-
२. ग्गति[म्] [।*] यं लोको बहु-रोग-वेग-विवशः संश्रित्य चेतो-लभः पायाद्वः स जगत्पिधान-पुटभिद्रश्म्या-
३. करो भास्करः ॥[१॥*] परमभट्टारक-महाराजाधिराज-श्री-स्कन्धगुप्तस्याभिवर्द्धमान-विजय-राज्य-संव्वसर-शते षच्च(ट्च)-त्वा-
४. [रि]ङ्शदुत्तरतमे फाल्गुन-मासे तत्प[ा*]द-परिगृहीतस्य विषय-पति-शर्व्वनागस्यान्तर्व्वेद्यां भोगाभिवृद्धये वर्त्त-
५. माने [।*] चन्द्रापुरक-पद्मा-चातुर्व्विद्य-सामान्य-ब्राह्मण-देवविष्णु-र्द्देवपुत्रो हरित्रात-पौत्रः डुडिक-प्रपौत्रः सततानग्नि-हो-

६. त्र-छ(च्छ)न्दोगो राणायणी(नी)यो वर्षगण-सगोत्र इन्द्रापुरक-
वणिग्भ्यां क्षत्रियाचलवर्म-भृ(भ्रु)कुण्ठसिङ्हाभ्यामधिष्टा(ष्ठा)-

७. नस्य प्राच्यां दिशीन्द्रपुराधिष्ठान-माडास्यात-लग्नमेव प्रतिष्ठा-
पितक-भगवते सवित्रे दीपोपयोज्यमात्म-यशो-

८. [ऽ*]भिवृद्धये मूल्यं प्रयच्छतिः(ति) [।।*] इन्द्रपुर-निवासिन्य-
स्तैलिक-श्रेण्या जीवन्त-प्रवराया इतो [ऽ*]धिष्ठानादपक्रम-

९. ण-संप्रवेश-यथास्थिरायाः आजस्रिकं ग्रहपतेर्द्विज-मूल्य-दत्तमनया
तु श्रेण्या यदभग्न-योग्यम्(गं)

१०. प्रत्थ(थ)मार्हाव्य[व*]च्छिन्न-संस्थं देयं तैलस्य तुल्येन पल-द्वयं
तु २ चन्द्रार्क्क-सम-कालीयं [।।*]

११ यो व्यक्क्रमेद्दायमिमं निबद्धम्(द्धं) गो-घ्नो गुरु-घ्नो द्विज-घातकः
सः [।*] तैः पातकै [*]

१२. पञ्चभिरन्वितो [ऽ*]धर्ग(धो ग)च्छेन्नरः सोपनिपातकैश्चेति ।।[२*]

---

## BHITARI STONE PILLAR INSCRIPTON OF
### SKANDAGUPTA (A.D. 455—67)

**Site**—The column stands outside the village Bhitari, five miles NE. of Sayyidpur, Distt. Ghazipur, U.P.

**Published in**—*Fleet*, Corp. Insc. Ind., Vol. III No. 13, p. 53 f. ; *D. C. Sircar*, Select Insc., p. 312, ff. ; *Bhandarkar's* list, 1549.

**Language**—Sanskrit, partly in prose and partly in verse.

**Script**—Northern Brahmi, resembling Mathura Inscription of Chandra Gupta II, though cut more squarely.

**Metres**—पुष्पिताग्रा 1 ; मालिनी 2-6 ; शार्दूल-विक्रीडित 7, 8 ; अनुष्टुभ् 9-12.

**Object**—Installation of the image of Vishnu शार्ङ्गिन् and allotment to it of the village in which it stands.

१. [सिद्धम्] [।।] [सर्व्व]-राज[ोच्छे]त्तुः पृथिव्यामप्रतिरथस्य चतु-रुदधि-सलिलास्वादित-यशसो धनद-वरुणेन्द्र[ा]न्तक-स[मस्य]

२. कृतान्त-परशोः न्यायागत[ा]नेक-गो-हिरण्य-क[ो]टि-प्रदस्य चिरो[त्स]न्नाश्वमेधाहर्त्तु र्महाराज-श्री-गुप्त-प्रपौत्र[स्य]

३. महाराज-श्री-घटोत्कच-पौत्रस्य महाराजाधिराज-श्री-चन्द्रगुप्त-पुत्रस्य लिच्छवि-दौहित्रस्य महादेव्यां कुम[ा]र[दे]व्या-

४. मुत्पन्नस्य महाराजाधिराज-श्री-समुद्रगुप्तस्य पुत्रस्तत्परिगृहीतो महादेव्यान्दत्तदेव्यामुत्पन्नः स्वयं चाप्रतिरथः

५. परम-भागवतो महाराजाधिर[ा]ज-श्री-चन्द्रगुप्तस्तस्य पुत्रस्तत्पा-दानुद्ध्यातो महादेव्यां ध्रुवदेव्यामुत्पन्नः परम-

६. भागवतो महाराजाधिर[ा]ज-श्री-कुमारगुप्तस्तस्य — प्रथित-पृथु-मति-स्वभाव-शक्तेः पृथु-यशसः पृथिवी-पतेः पृथु-श्रीः[।]

७. पि[तृ]-प[रि]गत-पाद-पद्म-वर्त्ती प्रथित-यशाः पृथिवी-पतिः सुतो [ऽ*]यम् [।।१।।*] जगति भु[ज]-बलाड्यो(ढ्यो) गुप्त-वङ्शैक-वीरः प्रथित-विपुल-

८. धामा नामतः स्कन्दगुप्तः [।*] सुचरित-चरितानां येन वृत्तेन वृत्तं न विहतममलात्मा तान-धीदा(?)-विनीतः [।।२।।*] विनय-

९. बल-सुनीतैर्व्विक्क्रमेण क्क्रमेण प्रतिदिनमभियोगादीप्सितं येन ल[ब्ध्व]ा [।*] स्वभिमत-विजिगीषा-प्रोद्यतानां परेषां प्रणि-

१०. हित इव ले[भे सं]विधानोपदेशः [।।३।।*] विचलित-कुल-लक्ष्मी-स्तम्भनायोद्यतेन क्षिति-तल-शयनीये येन नीता त्रियामा [।*] समु-

११. दित-बल-कोषान्पुष्यमित्रांश्च [जि]त्वा क्षितिप-चरण-पीठे स्था-पितो वाम-पादः [।।४।।*] प्रसभमनुप[मै]र्व्विध्वस्त-शस्त्र-प्रतापै-र्विन[य-स]मु-

१२. [चितैश्च] क्षान्ति-शौ[र्यै]र्न्निरूढम् [।*] चरितममल-कीर्त्तेर्ग्गी-

यते यस्य शुभ्रं दिशि-दिशि परितुष्टैराकुमारं मनुष्यैः [॥५॥*]
पितरि दिवमुपे[ते]

१३. विप्लुतां वङ्श-लक्ष्मीं भुज-बल-विजितारिर्य्यः प्रतिष्ठाप्य भूयः[।*]
जितमिति परितोषान्मातरं सास्र-नेत्रां हत-रिपुरिव कृष्णो देव-
कीमभ्युपे-

१४. [तः] [॥६॥*] [स्वै]र्द्द[ण्डैः ⏑⏑]र(?)त्यु[–]त्प्रचलितं वङ्शं
प्रतिष्ठाप्य यो बाहुभ्यामवनिं विजित्य हि जितेष्वार्त्तेषु कृत्वा
दयाम् [।*] नोत्सिक्तो [न] च विस्मितः प्रतिदिनं

१५. संवर्द्धमान-द्युतिः गीतैश्च स्तुतिभिश्च वन्दक-ज[नो ?] यं प्राप-
यत्यार्य्यताम् [॥७॥*] हूणैर्य्यस्य समागतस्य समरे दोर्भ्यां धरा
कंपिता भीमावर्त्त-करस्य

१६. शत्रुषु शरा[– – ⏑⏑ – पातिताः ? ।*]– – –⏑⏑⏑⏑–⏑⏑–
विरचितं (?) प्रख्यापितो [दीप्ति-दा ?]न द्यो(?)ति[⏑⏑]
नभी(?)षु लक्ष्यत इव श्रोत्रेषु गाङ्ग-ध्वनिः [॥८॥*]

१७. [स्व]-पितुः कीर्त्ति – * * * * * ⏑⏑–⏑⏑ * [।*] * * *
* ⏑⏑–* * * * * * ⏑⏑–⏑⏑ * [॥९॥*] [कर्त्तव्या]
प्रतिमा काचित्प्रतिमां तस्य शार्ङ्गिणः [।*]

१८. [सु]प्रतीतश्चकारेमां [यावदाचन्द्र-तारकम् ॥१०॥*] इह चैनां
प्रतिष्ठाप्य सुप्रतिष्ठित-शासनः [।*] ग्राममेनं स विदधे पितुः
पु[ण्य]ाभिवृद्धये [॥११॥*]

१९. अतो भगवतो मूर्त्तिरियं यश्चात्र संस्थितः(?) [।*] उभयं
निर्द्दिदेशासौ पितुः पुण्याय पुण्य-धीरिति [॥१२॥*]

---

## SARNATH BUDDHIST STONE-IMAGE INSCRIPTION OF KUMARAGUPTA I

Year 154 (A. D. 473)

**Provenance**—Sarnath, Varanasi.

**Published in**—*Gupta*, Arch. Sur. Ind. An. Rep. 1914-15., p. 124; *D. C. Sircar*, Select Inscriptions, p. 320 f.

**Language**—Sanskrit.

**Script**—Northern Brahmi.

**Metre**—उद्गीति 1; आर्या 2; गीति (?) 3;

**Object**—Installation of the image of शास्तृ (the Buddha).

१. वर्ष-शते गुप्तानां सच(च्च)तुः-पञ्चाशदुत्तरे [।*] भूमिं रक्षति कुमारगुप्ते मासि ज्येष्ठे द्वितीयायाम् ॥[१*]

२. भक्त्यावर्ज्जित-मनसा यतिना पूजार्त्थमभयमित्रेण [।*] प्रतिमा [ऽ*]प्रतिमस्य गुणैं[र]प[रे]यं [का]रिता शास्तुः ॥[२*]

३. माता-पितृ-गुरु-पू[र्व्वैं]ः पुण्येनानेन सत्व(त्त्व)-कायो [ऽ*]यं [।*] लभतामभिमतमुपशमं [हित-सुखं तदेव भवतु सत्त्वाना]म्? ॥[३*]

---

## BHITARI SEAL OF KUMARAGUPTA II or III

**Provenance**—Bhitari in Ghazipur Distt., U.P.

**Published in**—*Hoernle*, JASB, Vol. LVIII. pt. i, p. 89; *Fleet*, Ind. Ant., Vol. XIX, 1890, p. 225; *D. C. Sircar*, Select Inscriptions, pp. 321 f.

**Language**—Sanskrit.

**Script**—Northern Brahmi of the 5th-6th cent. A.D.

**Object**—Records the genealogy of Kumara Gupta.

१. [सर्व्व]-राजोच्छेत्तु ⁀ पृथिव्यामप्रतिरथस्य महाराज-श्री-[गुप्त]-प्रपौ[त्र]स्य महाराज-श्री-घटोत्कच-प्रौत्रस्य म[हा]-

२. [राजा]धिर[ा]ज-श्री-चन्द्रगुप्त-पुत्रस्य लिच्छ[वि-दौहित्रस्य] म[हादे]व्य[ां कुमा]रदेव्यामुत्पन्नस्य महाराजाधिराज-

३: [श्री]-समुद्रगुप्तस्य पुत्त्रस्तत्परि[गृही]तो म[हादेव्यान्दत्तदेव्या]-
मुत्पन्नस्स्वयं च[ा]प्रतिरथ परम-भाग-

४. [वतो महाराजा]धिराज-श्री-चन्द्रगुप्तस्तस्य [पुत्त्र]स्तत्पाद[ा]नु-
[द्ध्या]तो महादेव्य[ां ध्रु]वदेव्यामुत्पन्नो [महारा]-

५. [जाधि]राज-श्री-कुमार[गुप्त]स्तस्य पुत्त्रस्तत्पादानुद्ध्या[तो]
महादेव्यामनन्तदेव्य[ा]मुत्पन्नो महा[रा]-

६. [जाधिरा]ज-श्री-[पुरगुप्त]स्तस्य पुत्त्रस्तत्पादानुद्ध्य[ातो]
महादे[व्यां] श्री-चन्द्रदेव्यामुत्प[न्नो] म[हा]-

७. [राजाधिरा]ज-श्री-नरसिंहगुप्तस्तस्य [पु]त्त्रस्त[त्प]ादा[नुद्धयातो]
मह[ादेव्यां]श्री-म[न्मित्र]-

८. [देव्या]मु[त्प]न्न परमभ[ा]गवतो मह[ाराजाधिरा]ज-श्री-
कुम[ा]र[गुप्तः॥]

---

## MANDASOR STONE INSCRIPTION OF THE GUILD OF SILK-WEAVERS

### (of the time of Kumaragupta & Bandhuvarman)

Malva year 493 and 529 (A. D. 436 & 473)

**Site**—Mediaeval temple of Siva in Mandasor, ancient Dasapura, in Madhya Pradesh. The inscription is on a dark sandstone slab built into the wall on the right hand, half-way down a small descent of steps leading to the river in front of the temple.

**Published in**—*Fleet*, Ind. Ant. Vol. XV, p. 194 ff. and Corp. Insc. Ind., Vol. III, No. 18, p. 81 ff. ; *D. C. Sircar*, Select Ins. p. 288 ff. ; *Bhandarkar's* list, No. 6.

**Language**—Sanskrit verse, except सिद्धम् ; and सिद्धिरस्तु in l. 24.

**Script**—Southern Brahmi

**Metres**—शार्दूल-विक्रीडित 1, 2 ; वसन्त-तिलका 3, 5, 6, 14, 18. 20, 22. 25, 27, 30—32 40 ; आर्या 4, 13, 21, 33, 38, 39, 41, 42 ; उपेन्द्रवज्रा 7—9, 24 ; उपजाति 10, 12, 28 ; द्रुत-विलम्बित 15 ; हरिणी 16 ; इन्द्रवज्रा 17, 26 ; मालिनी 19, 43 ; वंशस्थ 23 ; मन्दाक्रान्ता 29 ; अनुष्टुभ् 34—37, 44.

**Object**—To record the migration of a number of silk-weavers from Lata visaya into the city of दशपुर and building of a temple of the sun by the guild formed by the silk-weavers in M. S. 493 and its repairs by that guild in M. S. 529.

१. [सिद्ध]म् [।।] य[ो] [वृत्त्य]र्त्थमुपास्यते सुर-गणैस्सिद्धैश्च सिद्धर्चात्थिभिद्धर्चानैकाग्र-परैर्व्विधेय-विषयैम्मोक्षार्त्थिभिर्य्योगिभिः। भक्त्या तीव्र-तपोधनैश्च मुनिभिश्शाप-प्रसाद-क्षमैर्हेतुर्य्यो जगत× क्षयाभ्युदययो ⌣ पायात्स वो भास्करः ।[।१] तत्व(त्त्व)-ज्ञान-विदो [ऽ*]पि यस्य न विदुर्ब्र ह्मर्ष-

२. यो [ऽ*]भ्युद्यता× कत्स्नं यश्च गभस्तिभिः प्रविसृतै ⌣ पु[ष्ण]ाति लोक-त्रयम् । गन्धर्व्वामर-सिद्ध-किन्नर-नरैस्संस्तूयते [ऽ*]भ्यु-त्थितो भक्तेभ्यश्च ददाति यो [ऽ*]भिलषितं तस्मै सवित्रे नमः ।[।२*] य ⌣ प्रत्यहं प्रतिविभात्युदयाचलेन्द्र-विस्तीर्ण्ण-तुङ्ग-शिखर-स्खलितांशु-जालः [।*] क्षीबांगना-

३. जन-कपोल-तलाभिताम्र ⌣ पायात्स वस्सु[कि]रणाभरणो विव-स्वान् ।[।३*] कुसुम-भरानत-तरुवर-देवकुल-सभा-विहार-रमणि(णी)यात् । लाट-विषयान्नगावृत-शैलाज्जगति प्रथित-शिल्पाः ।[।४*] ते देश-पार्त्थिव-गुणापहृताः प्रकाशमद्ध्वादि-जान्यविरलान्यसुखा-

४. न्यपास्य । जातादरा दशपुरं प्रथमं मनोभिरन्वागतास्स-सुत-बन्धु-जनास्समेत्य ।।[५*] मत्तेभ-गण्ड-तट-विच्युत-दान-बिन्दु-सिक्तोपलाचल-सहस्र-विभूषा(ष)णायाः [।*] पुष्पावनम्र-तरु-षण्ड-वतंसकाया भूमे ⌣ परन्तिलक-भूतमिदं क्रमेण ।।[६*] तटोत्थ-वृक्ष-च्युत-

५. नैक-पुष्प-विचित्र-तीरान्त-जलानि-भान्ति । प्रफुल्ल-पद्माभरणानि यत्र सरांसि कारण्डव-संकुलानि ।।[७*] विलोल-वीची-चलितार-विन्द-पतद्रजः-पिञ्जरितैश्च हंसैः । स्व-केसरोदार-भरावभुग्नैः क्वचित्सरांस्यम्बुरुहैश्च भान्ति ।[।८*] स्व-पुष्प-भारावनतै-र्न्नगेन्द्रै र्मद-

६. प्रगल्भालि-कुल-स्वनैश्च । अजस्र-गाभिश्च पुराङ्गनाभिर्व्वनानि यस्मिन्समलंकृतानि ।।[९*] चलत्पताकान्यबला-सनाथान्यत्यर्थ-शुक्लान्यधिकोन्नतानि । तडिल्लता-चित्र-सिताभ्र-कूट-तुल्योप-मानानि गृहाणि यत्र ।।[१०*] कैलास-तुङ्ग-शिखर-प्रतिमानि चान्यान्याभान्ति दीर्ग्घ-वलभी-

७. नि स-वेदिकानि । गन्धर्व्व-शब्द-मुखरानि (णि) निविष्ट-चित्र-कर्म्माणि लोल-कदली-वन-शोभितानि ।।[११*] प्रासाद-माला-भिरलंकृतानि धरां विदार्य्यैव समुत्थितानि । विमान-माला-सदृशानि यत्र गृहाणि पूर्ण्णेन्दु-करामलानि ।।[१२*] यद्भात्य-भिरम्य-सरिद्व (द्द्व)येन चपलोर्म्मिणा समुपगूढं [।*]

८. रहसि कुच-शालिनीभ्यां प्रीति-रतिभ्यां स्मराङ्गमिव ।।[१३*] सत्य-क्षमा-दम-शम-व्रत-शौच-धैर्य्य-स्वाद्धचाय-वृत्त-विनय-स्थिति-बुद्धच्युपेतैः । विद्या-तपो-निधिभिरस्मयितैश्च विप्रैर्य्यद्भ्राजते ग्रह-गणैःखमिव प्रदीप्तैः ।।[१४*] अथ समेत्य निरन्तर-सङ्गतै-रहरहः-प्रविजृम्भित-

९. सौहृदाः [।*] नृपतिभिस्सुतवत्प्रतिम[ा]निताः प्रमुदिता न्यवसन्त सुखं पुरे ।।[१५*] श्रवण-सुभग (गं) ध[ा]नुर्व्वे[द्यं] दृढं परि-निष्ठिताः सुचरित-शतासङ्गाः केचिद्विचित्र-कथाविदः । विनय-निभृतास्सम्यग्धर्म्म-प्रसङ्ग-परायणाः प्रियमपरुषं पत्थ्यं चान्ये क्षमा बहु भाषितुं ।।[१६*]

१०. केचित्स्वकर्म्मण्यधिकास्तथान्यैर्व्विज्ञायते ज्योतिषमात्मवद्भिः । अद्यापि चान्ये समर-प्रगल्भाः कुर्व्वन्त्यरीणामहितं प्रसह्य ।[।१७*] व्रज्ञा-मनोज्ञ-वधवः प्रथितोरु-वंशा वंशानुरूप-चरिता-भरणास्तथा [ऽ*]न्ये । सत्य-व्रताः प्रणयिनामुपकार-दक्षा विस्रम्भ-

११. [पूर्व्वं]मपरे दृढ-सौहृदाश्च ।।[१८*] विजित-विषय-सङ्गैर्द्धर्म्म-शीलैस्तथा [ऽ*]न्यै[र्मृ]दुभिरधिक-सत्वै (त्त्वै)ल्लोक-यात्रामरैश्च । स्व-कुल-तिलक-भूतैर्मुक्त-रागैरुदारैरधिकमभिविभाति श्रेणिरेवं

प्रकारैः ॥[१९*] तारुण्य-कान्त्युपचितो [ऽ*]पि सुवर्ण्ण-हार-तांबूल-पुष्प-विधिना सम-

१२. [लंकृ]तो [ऽ*]पि । नारी-जनः श्रियमुपैति न तावदग्र्यां यावन्न पट्टमय-वस्त्र-[यु]गानि धत्ते ॥[२०*] स्पर्श[व]ता वर्ण्णान्तर-विभाग-चित्रेण नेत्र-सुभगेन । यैस्सकलमिदं क्षितितलमलंकृतं पट्ट-वस्त्रेण ॥[२१*] विद्याधरी-रुचिर-पल्लव-कर्ण्णपूर-वाते-रितास्थिरतरं प्रविचिन्त्य

१३. [लो]कं । मानुष्यमर्त्थ-निचयांश्च तथा विशालांस्तेषां शुभा मतिरभूदचला ततस्तु ॥[२२*] चतुस्समुद्रा[न्त]-विलोल-मेखलां सुमेरु-कैलास-बृहत्पयोधराम् । वनान्त-वान्त-स्फुट-पुष्प-हासिनीं कुमारगुप्ते प्रि(पृ)थिवीं प्रशासति ॥[२३*] समान-धीश्शुक्र-बृहस्पतिभ्यां ललाम-भूतो भुवि

१४. पार्त्थिवानां । रणेषु यः पार्त्थ-समान-कर्म्मा बभूव गोप्ता नृप-विश्ववर्म्मा ॥[२४*] दीनानुकंपन-परः कृपणार्त्त-वर्ग-सन्ध[ा]-प्रदो [ऽ*]धिक-दयालुरनाथ-नाथः । कल्प-द्रुमः प्रणयिनामभयं-प्रदश्च भीतस्य यो जनपदस्य च बन्धुरासीत् ॥[२५*] तस्यात्मजः स्थैर्य्य-नयोपपन्नो बन्धु-प्रियो

१५. बन्धुरिव प्रजानां । बंध्वर्त्ति-हर्त्ता नृप-बन्धुवर्म्मा द्वि[ड्]दृप्त-पक्ष-क्षपणैक-दक्षः ॥[२६*] कान्तो युवा रण-पटुर्व्विनयान्वितश्च राजा [ऽ*]पि सन्नुपसृतो न मदैः स्मयाद्यैः । शृङ्गार-मूर्त्तिरभि-भात्यनलंकृतो [ऽ*]पि रूपेण य× कुसुमचाप इव द्वितीयः ॥[२७*] वैधव्य-तीव्र-व्यसन-क्षतानां

१६. स्म्रि(स्मृ)त्वा यमद्याप्यरि-सुन्दरीणां । भयाद्भवत्यायत-लोच-नानां घन-स्तनायास-करः-प्रकम्पः ॥[२८*] तस्मिन्नेव क्षिति-पतिव्रि(वृ)षे बंधुवर्म्मण्युदारे सम्यक्स्फीतं दशपुरमिदं पालय-त्युन्नतांसे । शिल्पावाप्तैर्द्धन-समुदयैः पट्टवायैरुदारं श्रेणी-भूतैर्भ-वनमतुलं कारितं

१७. दीप्त-रश्मेः ॥[२६*] विस्तीर्ण्ण-तुङ्ग-शिखरं शिखरि-प्रकाश-मभ्युद्गतेन्द्वमल-रश्मि-कलाप-गौरं। यद्भाति पश्चिम-पुरस्य निविष्ट-कान्त-चूडामणि-प्रतिसमन्नयनाभिरामं ॥[३०*] रामा-सनाथ-[र*]चने दर-भास्करांशु-वह्नि-प्रताप-सुभगे जल-लीन-मीने। चन्द्रांशु-हर्म्यतल-

१८. चन्दन-तालवृन्त-हारोपभोध(ग)-रहिते हिम-दग्ध-पद्मे ॥[३१*] रोद्ध्र-प्रियंगु-तरु-कुन्दलता-विकोश-पुष्पासव-प्रमु[दि]तालि-कला-भिरामे। काले तुषार-कण-कर्क्कश-शीत-वात-वेग-प्रनृत्त-लवली-नगणैकशाखे ॥[३२*] स्मर-वशग-तरुणजन-वल्लभाङ्गना-विपुल-कान्त-पीनोरु-

१९. स्तन-जघन-घनालिङ्गन-निर्भर्त्सित-तुहिन-हिम-पाते ॥[३३*] मालवानां गण-स्थित्या या[ते] शत-चतुष्टये। त्रि-नवत्यधिके [ऽ*]ब्दानाम्रि(मृ)तौ सेव्य-घन-स्वने ॥[३४*] सहस्य-मास शुक्लस्य प्रशस्ते [ऽ*]ह्नि त्रयोदशे। मङ्गलाचार-विधिना प्रासादो [ऽ*]यं निवेशितः ॥[३५*] बहुना समतीतेन

२०. कालेनान्यैश्च पार्त्थिवैः। व्यशीर्य्यतैक-देशो [ऽ*]स्य भवनस्य ततो [ऽ*]धुना ॥[३६*] स्व-यशो-व्रि(वृ)द्धये सर्व्वमत्युदारमुदारया संस्कारितमिदं भूयः श्रेण्या भानुमतो गृहं ॥[३७*] अत्युन्नत-मवदातं नभ[:]-स्पृशन्निव मनोहरैः शिखरैः। शशि-भान्वोरभ्यु-दयेष्वमल-मयूखायतन-

२१. भूतं ॥[३८*] वत्सर-शतेषु पंचसु विशं(विंश)त्यधिकेषु नवसु चाब्देषु। यातेष्वभिरम्य-तपस्य-मास-शुक्ल-द्वितीयायां ॥[३९*] स्पष्टैरशोकतरु-केतक-सिंदुवार-लोलातिमुक्तकलता-मदयन्ति-कानां। पुष्पोद्गमैरभिनवैरधिगम्य नूनमैक्यं विजृंभित-शरे हर-पू(धू)त-देहे ॥[४०*]

२२. मधु-पान-मुदित-मधुकर-कुलोपगीत-नगनै(णै)क-पृथु-शाखे। काले नवकुसुमोद्गम-दंतुर-कांत-प्रचुर-रोद्ध्रे ॥[४१*] शशिनेव

नभो विमलं कौ[स्तु]भ-मणिनेव शार्ङ्गिणो वक्षः। भवन-वरेण तथेदं पुरमखिलमलंकृतमुदारं ॥[४२*] अ-मलिन-शशि-

२३ लेखा-दंतुरं पिङ्गलानां परिवहति समूहं यावदीशो जटानां। विकच-कमल-मालामंस-सक्तां च शार्ङ्गी भवनमिदमुदारं शाश्वत-न्तावदस्तु ॥[४३*] श्रेण्यादेशेन भक्त्या च कारितं भवनं रवेः। पूर्व्वा चेयं प्रयत्नेन रचिता वत्सभट्टिना ॥[४४*]

२४. स्वस्ति कर्तृ-लेखक-वाचक-श्रोतृभ्यः ॥ सिद्धिरस्तु ॥

---

## SARNATH BUDDHIST IMAGE INSCRIPTION OF BUDHAGUPTA

The year 157 (476 A. D.)

**Provenance**—Sarnath, Varanasi.

**Published in**—*Gupte*, Arch. Sur. Ind. An. Rep., 1914-15, pp. 124-25; *D. C. Sircar*, Select Inscriptions, p. 323.

**Language**—Sanskrit, verse.

**Script**—Northern Brahmi.

**Metre**—अनुष्टुभ् throughout.

**Object**—Installation of the image of Buddha.

१. गुप्तानां समतिक्रान्ते सप्त-पंचाशदुत्तरे [।*] शते समानां पृथिवीं बुधगुप्ते प्रशासति ॥[१*] [वैशाख-मास-सप्तम्यां मूले श्याम-गते]

२. मया [।*] कारिता [ऽ*]भयमित्रेण प्रतिमा शाक्य-भिक्षुणा ॥[२*]
इमामुद्दण्ड-सच्छत्र-पद्मास[न-विभूषितां] [।*]
[देवपुत्त्रवतो दिव्यां] चित्र-वि[द्या]-सचित्रितां ॥[३*]
यदत्र पुण्यं प्रतिमां कारयित्वा मया भृतम् [।*]
माता-[पित्त्रोर्गुरूणां च लोकस्य च समाप्तये] [॥४*]

---

# DAMODARPUR COPPER-PLATE INSCRIPTION
## of the time of BUDHAGUPTA
### Gupta year 163 (A. D. 482)

**Provenance**—Damodarpur, Dinajpur Distt., Bengal.

**Published in**—*Basak*, Ep. Ind., XV, p. 135f.; *D. C. Sircar*, Select Inscriptions, p. 324ff.

**Language**—Sanskrit prose, except the benedictive and imprecatory verses at the end.

**Script**—Northern Brahmi.

**Metre**—अनुष्टुभ् 1-3.

**Object**—Grant of land to settle certain Brahmanas.

*First side*

१. [सं १०० ६०] ३ आषाढ-दि १० ३ परमदैवत-परमभट्टा-[र]क-महाराजाधिराज-श्री-बुधगुप्ते [पृथि]वी-पतौ तत्पाद-[परि]गृहीते पुण्ड्र[व]-

१. [र्द्धन]-भुक्तावुपरिक-महाराज-ब्रह्मदत्ते संव्यवहरति [।*] स्व[स्ति] [।*] पलाशवृन्दकात्सविश्वासं महत्तराद्यष्टकुलाधि[क]-

३. [र]ण-ग्रामिक-कुटुम्बि(म्बि)नश्च चण्डग्रामके ब्राह्मणाद्यान्नक्षुद्र-प्रकृति-कुटुम्बिनः कुशलमुक्त्वा [ऽ*]नुदर्शयन्ति [यथैवं ?]

४. [वि]ज्ञापयती(ति) नो ग्रामिक-नाभको [ऽ*]हमिच्छे(च्छामि) माता-पित्रोस्स्व-पुण्याप्यायनाय कदि(ति)चिद्ब्राह्मणार्य्यान्प्रति-वासयितुं

५. [तद]र्हथ ग्रामानुक्रम-विक्रय-मर्य्यादया मत्तो हिरण्यमुपसंगृह्य समुदाय-वा(बा)ह्याप्रद-[खिल]-क्षेत्राणा(णां)

६. [प्र]सादं कर्त्तुम(मि)ति [।*] यतः पुस्तपाल-पत्रदासेनावधारितं युक्तमनेन विज्ञापितमस्त्ययं विक्रय-

७. मर्य्यादा-प्रसङ्गस्तद्दीयतामस्य परमभट्टारक-महाराज-पा[दे]न पुण्योपचयायेति [।*] पुनरस्यैव

८. [पत्रदा]सस्यावधारणया [ऽ*]वधृत्य नाभक-हस्ताद्दीनार-[द्वय]-मुपसंगृह्य स्थाय(न)पाल-कपिल-श्रीभद्राभ्यामा(मा)य(यी)-[कृत्य] च समुदय-

*Second side*

९. [बाह्याप्रद]-[खि]ल-क्षेत्रस्य कुल्यवापमेकस्य वायिग्रामकोत्तर-पार्श्वस्यैव च सत्य-मर्य्यादा(द)या दक्षिण-पश्चिम-पूर्व्वेण

१०. मह[त्त]राद्यधिकरण-कुटुम्बि(म्बि)भिः प्रत्यवेक्षाष्टक-नवक-नवक^x-नलाभ्यामपविञ्छ्य चतुस्सीमो(मा उ)ल्लिङ्ग्य च नागदेवस्य-

११. [दत्तं] [।*] [तदु]त्तर-कालं संव्यवहारिभिर्द्धर्म्ममवेक्ष्य प्रतिपाल-नीयमुक्तञ्च महर्षिभिः [।*] स्व-दत्ताम्पर-दत्तां वा यो हरेत वसुन्धरां ।

१२. [स विष्ठा]यां कृमिर्भूत्वा पितृभिस्सह पच्यते [॥१*] बहुभिर्व्व-सुधा दत्ता राजभिस्सगरादिभिः [।*] यस्य यस्य यदा भूमिस्तस्य तस्य

१३. तदा फलं [॥२*] षष्टि वर्ष-सहस्राणि स्वर्गे मोदति भूमि-दः[।*] आक्षेप्ता चानुमन्ता च तान्येव नरके वसेदिति ॥[३*]

---

## ERAN STONE PILLAR INSCRPTION
### OF BUDHAGUPTA
The year 165

**Site**—Monolith red-sandstone column standing near the group of temples at the village Eran, Sagar Distt., Madhya Pradesha. The inscription is on the west face towards the bottom of the lower and square part of the column.

**Published in**—*Fitz Edward Hall*, JBAS. Vol. VII, p. 633f.; *Fleet*, Corp. Insc. Ind., Vol. III, No. 19, pp. 88ff. ; *D. C. Sircar*, Select Ins. pp. 326 f.

**Language**—Sanskrit, partly in verse and partly in prose.

**Script**—Northern Brahmi, approximating in some respects to the type of Allahabad Pillar Inscription.

**Metre**—आर्या 1, 2, 3.

**Object**—To record the erection of the column (*Dhvaja-Stambha*) of god Janardana (Vishnu) by a Maharaja named Matrivishnu and his younger brother Dhanyavishnu.

१. जयति विभुश्चतुर्भुजश्चतुरार्णव-विपुल-सलिल-पर्य्यङ्कः [।*]
जगतः स्थित्युत्पत्ति-[व्ययादि]-

२. हेतुर्ग्गरुड-केतुः [॥१*] शते पञ्च-षष्टयधिके वर्षाणां भूपतौ च
बुधगुप्ते । आषाढ-मास-[शुक्ल]-

३. द्वादश्यां सुरगुरोर्द्दिवसे ।[।२*] सं १०० ६० ५ [॥*]
कालिन्दी-नर्म्मदयोर्म्मध्यं पालयति लोकपाल-गुणैर्ज्ज(णैः । ज)-
गति महार[ाज]-

४. श्रियमनुभवति सुरश्मिचन्द्रे च ।[।३*] अस्यां संवत्सर-मास-
दिवस-पूर्व्वायां [तिथौ*] स्व-कर्म्माभिरतस्य क्रतु-याजि[नः]

५. अधीत-स्वाध्यायस्य विप्रर्षेर्म्मैत्रायणीय-वृषभस्येन्द्रविष्णोः
प्रपौत्रेण पितुर्गुणानुकारिणो वरुण[विष्णोः]

६. पौत्रेण पितरमनुजातस्य स्व-वंश-वृद्धि-हेतोर्हरिविष्णोः पुत्रेणा-
त्यन्त-भगवद्भक्तेन विधातुरिच्छया स्वयंवरयेव र[ा]ज-

७. लक्ष्म्याधिगतेन चतुः-समुद्र-पर्य्यन्त-प्रथित-यशसा अक्षीण-मान-
धनेनानेक-शत्रु-समर-जिष्णुना महाराज-मातृविष्णुन[ा]

८. तस्यैवानुजेन तदनुविधायिन[ा] तत्प्रसाद-परिगृ[ही]तेन धन्य-
विष्णुना च ।x मातृपित्रोः (माता-पित्रोः) पुण्याप्यायनार्थमेष
भगवतः ।x

९. पुण्य-जनार्द्दनस्य जनार्द्दनस्य ध्वज-स्तम्भो [ऽ*]भ्युच्छ्रितः [॥*]
स्वस्त्यस्तु गो-ब्राह्मण-[पु]रोगाभ्यः सर्व्व-प्रजाभ्य इति । (॥)

---

# KHOH COPPER-PLATE INSCRIPTION
## OF MAHARAJA HASTIN

The year 163

**Provenance**—Found in the valley near the village Khoh in Nagaudh, Madhya Pradesha. Now in lucknow Museum.

**Published in**—*Fitz Edward Hall*, JBRAS., Vol. XXX, p. 10 ff. ; *Fleet*, Corp. Insc. Ind., Vol. III, No. 22, p. 100 ff.

**Language**—Sanskrit prose except for the benedictive and imprecatory verses in ll. 22-28.

**Script**—Northern Brahmi of Central India type, 5th-6th cent.

**Metre**—अनुष्टुभ् throughout.

**Object**—To record the grant, by Maharaja Hastin, of the *agrahara* of *Korparika* to certain Brahmanas.

*First Side*

१. नमो महादेवाय—स्वस्ति त्रि-षष्ट्युत्तरे [ऽ*]ब्द-शते गुप्त-नृप-राज्य-भुक्तौ

२. महाश्वयुज-संवत्य(त्स)रे चैत्र-मास-शुक्ल-पक्ष-द्वितीय[ा*]या-मस्य[ा*]न्दिवस-

३. पूर्व्व[ा*]या(यां) नृपति-परिव्राजक-कुलोत्पन्नेन महाराज-देवाढ्य-प्रनप्त(प्त्र)ा

४. महाराज-श्री-प्रभञ्जन-नप्त्रा महाराज-दामोदर-सुतेन गो-सहस्र-

५. हस्त्यश्व-हिरण्यानेक-भूमि-प्रदेन गुरु-पितृ-मातृ-पूज[ा*]-तनत्प-(तत्प)रेण-

६. त्यन्त-देव-ब्राह्मण-भक्तेन नैक-समर-शत-विजयिना स्व-वन्शा-मोद-क-

७- रेण-महाराज-श्री-हस्तिना स्व-पुण्याप्यायनार्थमग्निस्व[ा*]मि-पुत्र-भरद्वाज-

८. सगोत्र-वाजि(ज)सनेय-सब्रह्मचारि(रि)णे देवस्वामिने शर्व्वस्वा-मिने च

९. गोरि(गौरी)स्वामिने वाजि(ज)सनेय-सब्रह्मचारिणे कौत्स-
सगोत्राय दि-

११. वाकर-स्वामिने च स्व[ा*]तिस्वामिने वाजसनेय-सब्रा(ब्र)ह्मचा-
रिणे भार्ग्ग-

११. व-सगोत्राय वरुणशर्म्मणः(णे) बप्पस्वामिने वासुल-सगोत्र[ा*]य

१२. कठ-सब्रह्मचारिणे कुमारदेवरेव(देवाय) वाजि(ज)सनेय-सब्रह्म-
च[ा*]रि-

१३. न(णे) मात(तृ)शर्म्मः(र्म्म)-रुखरदेवः(व)-कौद्रवदेवः(व)-
विष्ण(ष्णु)देवः(व)-

*Second Side*

१४. देवनाग-कुमारसेन-रुद्रशर्म्म- ।x देवदाङ्ग(ङ्गि)र[ो*]-लस्वो(म्बो)
ष्ठदेदमित(देवमित्र)-

१५. महादेव-गुण्ठक-इत्येवमादिभ्यो ब्रह्मणेभ्यो(भ्य) [उ*]त्तरे पट्टे
कोर्प्परि-

१३. काग्रहारः सोद्रङ्गः सोपरिकरः अ-चाट-भट-प्रावेश्यो [ऽ*]तिसृष्टः

१७. स्त(त)स्याघाटाः पूर्व्वेण कोर्प्पर-गर्त्ता । उत्तरेणानिमुक्तक-कोणकः

१८. वङ्गर-ग्रामकस्य दक्षिण-प[ा*]श्वे वलक-मद्धच्यम(द्धचमे) वृकः
अम्ब्र(म्र)ातसंता(भा ?)र-

१९. कः [।*] पश्चिमेन नागसरी । दक्षिणेन बलवर्म्म-परिच्छेदः [।।*]
तदस्म-

२०. कु(त्कु)लोत्थैर्म्मत्पादभि(पि)ण्डोपजीविभिर्व्वा कालान्तरेष्वपि न
व्याघातः कार्य्य[ः*] [।*]

२१. एवमाज्ञाप्त(ज्ञप्ते) यो [ऽ*]न्यथा कुर्य्यान्त(त्त)महं देहान्तर-गतो
[ऽ]पि महतावध्याने-

२२. न निर्दहे[यम् ।*] दु(उ)क्तञ्च भगवता परमर्षिणा वेद-व्यासेन
[।*] पूर्व्व-दत्ता(त्तां)

२३. द्विजातिभ्यो यत्नाद्रक्ष्य(क्ष) युधिष्ठिरः(र) [।*] मही(हीं) मह-
(हि)मतां श्रेष्ठ दानाच्छ्रे-

२४. यो [ऽ*]नुपालनं ।[।१*] बहुभिर्व्वसुधा भुक्ता राजभिः सगरा-
दिभिः [।*] स(य)स्य यx

२५. यस्य यदा भूमिस्तस्य [तस्य*] तदा फलन्(म्) [।।२*] स्व-दत्ता-
(त्तां) पर-दत्तां वा यो हरे-

२६. त वसुन्धराः(राम्) [।*] स विष्ठया(विष्ठायां) कृमिर्भूत्वा
पित्रभि(पितृभिः) सह पच्यते [।।३*]

*Third Side*

२७. षष्टः(ष्टिं) व्व(व)[र्ष*]-सहस्राणि स्वर्गे मोदति भु(भू)मिदः
[।*] आच्छेता(त्ता)

२८. चानुमन्त[ा*] म(च) त[ा*]न्येव नरके वसे[त्*] [।।४*] लिखि-
तञ्च वक्क्राम[ा*]त्य-प्रन-

२९. प्त्रनत्रा(प्त्रा) भोगिक-नरदत्त-नप्ता(प्त्रा) भोगिक-रविदत्त-
पुत्रेन(ण) महा-

३०. सान्धिविग्रहिक-सूर्यदतेनः(दत्तेन) [।*] भग्रहो दूतक[ः।।*]

---

## KHOH COPPER-PLATE INSCRIPTION OF

### MAHARAJA SAMKSHOBHA

The year 209

**Provenance**—From a valley near Khoh in Nagaudh in Madhya Pradesha,
**Publised in**—*Fleet*, Corp. Insc. Ind., Vol. III; No. 25, p.
**Language**—Sanskrit prose and verses quoted from महाभारत.
**Script**—Southern Brahmi.
**Metre**—अनुष्टुभ्.
**Object**—Grant by महाराज संक्षोभ at the request of छोडुगोमिन्, at the village ओपाणि to a temple of the goddess पिष्टपुरी, some local form of लक्ष्मी, wife of विष्णु.

*First Side*

१. ओम् नमो भगवते वासुदेवाय ।। स्वस्ति नवोत्तरेव्द(ब्द)-शत-
द्वये गुप्त-नृप-र[ा*]ज्य-भुक्तौ

२. श्रीमति प्रवर्द्धमान-विजय-राज्ये महाश्वयुज-स(सं)वत्सरे चैत्र-
मास-शुक्ल-

३. पक्ष-त्त्रयोदश्य[ा*]मस्यां संब(व)त्सर-मास-दिवस-पूर्व्वाया(यां)
[तिथौ ।*] चतुर्दश-विद्या-स्थान-विदि-

४. त-परमार्थस्य-कपिलस्य(स्यै)व महर्षेः सर्व-तत्व(त्त्व)ज्ञस्य भर-
द्वाज-सगोत्रस्य नृप-

५. पि(ति)-परिव्राजक-सुशर्म्मणः कुलोत्पन्नेन महाराज-श्री-देवाढ्य-
पुत्र-प्रनप्त्रा महारा-

६. ज-श्री-प्रभञ्जन-प्रनप्त्रा महाराज-श्री-दामोदर-नप्त्रा गो-सहस्र-
हस्त्यश्व-हिरण्यानेक-

७. भूमि-प्रदस्य गुरु-पितृ-मातृ-पूजा-तत्परस्यात्यन्त-देव-ब्रा(ब्रा)ह्मण-
भक्तस्यानेक-समर-

८. शत-विजयिनः साष्टादशाटवीराज्याभ्यन्तरं डभा(? हा)ला-
राज्यमन्वयागतं समदि(? सम्यक्, सम्पदि or सपदि ?)

९. पालयिष्णो(ष्णो)रनेक-गुण-विख्यात-यशसो महाराज-श्री(श्री)-
हस्तिनः सुतेन

१०. वर्ण्णाश्रम-धर्म्म-स्थापना-निरतेन परम-भागवतेनात्यन्त-पितृ-
भक्तेन स्व-वं-

११. शामोद-करेण महाराज-श्री-संक्षोभेन(ण) मातापित्रोरात्मनश्च
पुण्याभि-

१२. व्रिद्धं(वृद्ध)ये छोड्डुगोमि-विज्ञा(ज्ञ)प्त्या तमेव च स्वग्ग(र्गं)-सो-
पान-पंक्तिमारोपय-

*Second Side*

१३. ता भगवत्याः पिष्टपुर्याः कारितक-देवकुले व(ब)लि-चरु-सत्रो-(त्त्रो)पयो-

१४. गार्थः(र्थं) खण्ड-स्फुटित-संस्कारार्थञ्च मणिनाग-पेठे श्रोपारिण-ग्राम-

१५. स्यार्द्धं चोर-द्रोहक-वर्ज्जः(वर्ज्जं) ताम्रशासनेनातिसृष्टं(ष्टम्) [।*] तदस्मत्कुलोत्थौः(त्थैः) म-

१६. त्पाद-पिण्डोपजीविभिर्व्वा कालान्तरेष्वपि न व्याघातः कार्य्यः[।*] एवमाज्ञा(ज्ञ)-

१७. प्त(प्ते) यो [ऽ*]न्यथा कुर्यात्तमहं देहान्तर-गतो [ऽ*]पि महता [ऽ*]वध्यानेन निर्द्दहेयं(यम्) [।।*]

१८. उक्तं च भगवता परमर्षिणा वेदव्यासेन व्यासेनः(न) [।*] पूर्व्व-दत्तां द्विजातिभ्यो

१९. यत्नाद्रक्ष युधिष्ठिरः(र) [।*] महीम्महिमता(तां) श्रेष्ठ दानाच्छ्रे-यो [ऽ*]नुपालनः(नम्) [।।१*] व(ब)हुभिः

२०. वसुधा भुक्ता राजभिस्सगरादिभिः [।*] यस्य यस्य यदा भूमिस्तस्य तस्य तदा

२१. फलं(लम्) [।।२*] षष्टिं वर्ष-सहस्राणि स्वर्ग्गे मोदति भूमिदः [।*] श्राक्षेप्ता चानुमन्ता च तान्ये-

२२. व नरके वसेत् [।।३*] भूमि-प्रदानान्ना(न्न) परं प्रदानं दानाद्वि-शिष्टं परिपालनञ्छ(ञ्च) [।*]

२३. सर्व्वे [ऽ*]तिसृष्टा(ष्टां) परिपाल्य भूमि(मिं) नृपा नृगाद्यास्त्रिदिवं प्रपन्नाः ।। लिखितं ञ्च(च)

२४. जीवित-नप्त्रा भुजंगदास-पुत्रेश्वरीदासेनेति [।*] स्व-मुखाज्ञा [।*] चैत्र-दि २० ८ [।।*] (See *D. C. Sircar*, Select Ins., p. 374 ff.)

---

# GUNAIGHAR COPPER-PLATE INSCRIPTION OF VAINYAGUPTA

Gupta year 188 (A. D. 507)

**Provenance**—Gunaighar, Tipperah Distt., Bengal.

**Published in**—*D. C. Bhattacharya*, Ind. Hist. Quart., VI, p. 53 ff.; *M. Ghosh*, Ibid., p. 561 ; *D. C. Sircar*, Select Inscriptions, p. 331 ff.

**Language**—Sanskrit prose except the last three imprecatory verses.

**Script**—Northern Brahmi.

**Metre**—अनुष्टुभ् 1-3.

**Object**—Grant of a piece of land in Kantedadaka village for the worship of Buddha and maintenance of the livelihood of the community of monks and for the repairs of the *Vihara.*

*First Side*

१. स्वति[।।*] महानौ-हस्त्यश्व-जयस्कन्धावारात्क्रीपुराद्भगवन्महा-देव-पादानुद्ध्यातो महाराज-श्री-वैन्यगुप्तः

२. कुशली [ब्राह्मणादीन्कुटुम्बिनः] स्व-पादोपजीविनश्च कुशलमाशंस्य समाज्ञापयति [।*] विदितं भवतामस्तु यथा

३. मया माता-पित्त्रोरात्मनश्च पु[ण्या]भिवृ[द्ध]ये [ऽ*]स्मत्पाद-दास-महाराज-रुद्रदत्त-विज्ञाप्यादनेनैव माहायानिक-शाक्यभिक्ष्वा-

४. चार्य्य-शान्तिदेवमुद्दिश्य गोप(?)··············[दिग्भागे ?] कार्य्यमाण-कार्य्यावलोकितेश्वराश्रम-विहारे अनेनै-

५. वाचार्य्येण प्रतिपादित[क]-माहायानिक-वैवर्त्तिक-भिक्षु-संघ[ा*]-नाम्परिग्रहे भगवतो बुद्धस्य सततं त्रिष्कालं(त्रिकालं)

६. गन्ध-पुष्प-दीप-धूपादि-प्र[वर्त्तनाय*] [त*]स्य भिक्षु-संघस्य चीवर-पिण्डपात-शयनासन-ग्लान-प्रत्यय-भैषज्यादि-

७. परिभोगाय विहारे [च] खण्ड-फुट्ट(=स्फुटित)-प्रतिसंस्कार-करणाय उत्तरमाण्डलिक-कान्तेडदक-ग्रामे सर्वतो भो-

८. गेनाग्रहारत्वेनैकादश-खिल-पाटकाः पञ्चभिः खण्डैस्ताम्र-पट्टेनातिसृष्टाः [।*] अपि च खलु श्रुति-स्मृती-

९. [ति*]हा[स]-विहितां पुण्य-भूमिदान-श्रुतिमैहिकामुत्रिक-फल-विशेषे[ण*] स्मृतो(तौ) भावतः समुपगम्य स्वतस्तु पी-

१०. डामप्यूरीकृत्य पात्रेभ्यो भूमिं [नापहरेत् बाधाञ्च न कुर्य्यात्] [।*] द्विष(?)द्भिरस्मद्वचन-गौरवात्स्व-यशो-धर्म्मावाप्तये चैते

११, पाटका अस्मिन्विहारे शश्वत्कालमभ्य[नुपालयितव्याः ।।*] अनु-पालनम्प्रति च भगवता पराशरात्मजेन वेदव्या-

१२. सेन व्यासेन गीताः श्लोका भवन्ति [।*] षष्टिं वर्ष-स[हस्रा]णि स्वर्ग्गे मोदति भूमिदः [।*] आक्षेप्ता चानुमन्ता च ता-

१३. न्येव न[र*]के वसेत् [।।१*] स्व-दत्तां पर-दत्ताम्वा(त्तां वा) यो हरेत [वसु]न्धरां [।*] [स] विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते [।।२*]

१४. पूर्व-दत्तां द्विजातिभ्यो यत्नाद्रक्ष युधिष्ठिर [।*] महीं महीमतां श्रेष्ठ दानाच्छ्रेयो [ऽ*]नुपालनं [।।३*] वर्त्तमानाष्टाशीत्त्यु(त्यु)-

१५. त्तर-शत-संवत्सरे पौष-मासस्य चतुर्व्विन्श(व्विंश)तितम-दिवसे दूतकेन महाप्रतीहार-महापीलुपति-पञ्चाधि-

१६. करणोपरिक-पाट्युपरिक-[पु×र× ?]पुरपालोपरिक-महाराज-श्री-महासामन्त-विजयसेनेनैतदेकादश-पाटक-दा-

१७. नायाज्ञामनुभाविताः कुमारामात्य-रेवज्जस्वामी भामह-वत्स-भोगिकाः(कौ) [च*] [।।*] लिखितं सन्धिविग्रहारि(धि)करण-काय-

१८. स्थ-नरदत्तेन [।।*] यत्रैक-क्षेत्र-खण्डे नव-द्रोणवापाधिक-सप्त-पाटक-परिमाणे सीमा-लिङ्गानि [।*] पूर्व्वेण गुणेका-

१९. ग्रहार-ग्राम-सीमा विष्णुवर्धकि-क्षेत्रश्च(ञ्च) [।*] दक्षिणेन मिदुविलाल(?)-क्षेत्रं राज-विहार-क्षेत्रञ्च [।*] पश्चिमेन सूरी-नाशीरस्पूर्णोक-

२०. क्षेत्रं [।*] उत्तरेण दोषी-भोग-पुष्करि[णी]...............
[ए*]वम्पियाकादित्य-व(ब)न्धु-क्षेत्राणाञ्च सीमा [।।*]

२१. द्वितीय-खण्डस्याष्टाविन्श(विंश)ति-द्रोणवाप-परिमाणस्य सीमा
[।*] पूर्व्वेण गुणिकाग्रहार-ग्राम-सीमा [।*] दक्षिणेन पक्क-

२२. विलाल(?)-क्षेत्रं [।*] पश्चिमेन राजविहार-क्षेत्रं [।*] उत्तरेण
वैद्य(?)-क्षेत्रं [।।*] तृतीय-खण्डस्य त्रयोविन्श(विंश)ति-द्रोणवाप-

२३. परिमाणस्य सीमा [।*] पूर्व्वेण............क्षेत्रं [।*] दक्षिणेन
नखद्वाच्चरिक(?)-क्षेत्र-सीमा [।*] पश्चिमेन

*Second Side*

२४. ज(जो ?)लारी-क्षेत्रं [।*] उत्तरेण नागी-जोडाक-क्षेत्रं [।।*]
चतुर्थस्य त्रिंशद्द्रोणवाप-परिमाण-क्षेत्र-खण्डस्य सीमा [।*]
पूर्व्वेण

२५. बुद्धाक-क्षेत्र-सीमा [।*] दक्षिणेन कालाक-क्षेत्रं [।*] पश्चिमेन
[सू]र्य्य-क्षेत्र-सीमा [।*] उत्तरेण महीपाल-क्षेत्रं [।।*] [प]ञ्च-
मस्य

२६. पादोन-पाटक-द्वय-परिमाण-क्षेत्र-खण्डस्य सीमा [।*] पूर्व्वेण
खण्ड-वि[डु]ग्गुरिक-क्षेत्रं [।*] दक्षिणेन मणिभद्द्र-

२७. क्षेत्रं [।*] पश्चिमेन यज्ञराल-क्षेत्र-सीमा [।*] उत्तरेण नादडक-
ग्राम-सीमेति [।।*] विहार-तल-भूमेरपि सीमा-लिङ्गानि [।*]

२८. पूर्व्वेण चूडामणि-नगर-श्री-नौयोगयोर्म्मद्ध्ये जोला [।*] दक्षिणेन
गणेश्वर-विलाल-पुष्करिण्या नौ-खातः [।*]

२९. पश्चिमेन प्रद्युम्नेश्वर-देवकुल-क्षेत्र-प्रान्तः [।*] उत्तरेण प्रडामार-
नौयोग-खातः [।।*] एतद्विहार-प्रावेश्य-शून्य-प्रतिकर-

३०. हज्जिक-खिल-भूमेरपि सीमा-लिङ्गानि [।*] पूर्व्वेण प्रद्युम्नेश्वर-
देवकुल-क्षेत्र-सीमा [।*] दक्षिणेन शाक्य-भिक्ष्वाचार्य्य-जित-

३१. सेन-वैहारिक-क्षेत्त्रावसा(?)नः(नम्) [।*] पश्चिमेन ह(?)चात-गंग उत्तरेण दण्ड-पुष्कि(ष्करि)णी चेति ।। सं १०० ८० ८ पोष्ष(पौष)-दि २० ४ [।।*]

---

## ERAN STONE BOAR INSCRIPTION OF TORAMANA (*c.* 500-515 A. D.)

**Site**—Ruined temple at the south end of the well-known temples to the west of the village Eran, Sagar Distt., Madhya Pradesha. The inscription is on the chest of a colossal red-sandstone statue of Varaha incarnation of Vishnu, standing in the portico of that temple.

**Published in**—*Prinsep*, JBAS, Vol. VII, p. 631 ff. ; *Fleet*, Corp. Ins. Ind., Vol. III, No. 36, p. 158 ff. *D. C. Sircar*, Select Insc. p. 396 f. ; *Bhandarkar's* list, 1269.

**Language**—Sanskrit, partly in verse and partly in prose.

**Script**—Northern Brahmi.

**Metres**—आर्या 1, 3 ; अनुष्टुभ् 2.

**Object**—To record the building of the temple, in which the statue of Varaha stands, by Dhanyavishnu, the younger brother of Maharaja Matrivishnu.

१. १ँ [।।*] जयति धरण्युद्धरणे घन-घोणाघात-घूर्णित-महीध्रः [।*] देवो वराह-मूर्त्तिस्त्रैलोक्य-महागृह-स्तम्भः [।।१*] वर्षे प्रथमे पृथिवी[म्]

१. पृथु-कीर्त्तौ पृथु-द्युतौ [।*] महाराजाधिराज-श्री-तोरमाणे प्रशासति ।[।२*] फाल्गुन-दिवसे दशमे ।x इत्येवं राज्य-वर्ष-मास-दिनैः [।*] एतस्यां

३. पूर्व्वायाम् ।x स्व-लक्षणैर्युक्त-पूर्व्वायाम् ।[।३*] स्व-कर्म्मा-भिरतस्य क्रतु-याजिनो [ऽ*]धीत-स्वाध्यायस्य विप्रर्षेर्म्मैत्राय-णीय-वृषभस्येन्द्रविष्णोः प्रपौत्रस्य ।

४. पितुर्गुणानुकारिणो वरुणविष्णोः पौत्त्रस्य पितरमनुजातस्य स्व-वंश-वृद्धि-हेतोर्हरिविष्णोः पुत्त्रस्यात्यन्त-भगवद्भक्तस्य विधातु-रिच्छया ।[x]

५. स्वयंवरयेव राज-लक्ष्म्याधिगतस्य चतुः-समुद्र-पर्यन्त-प्रथित-यशसः अ-क्षीण-मान-धनस्यानेक-शत्त्रु-समर-जिष्णोः महार[ा*]ज-मातृ-विष्णोः

६. स्वर्ग्गतस्य भ्रात्त्रानुजेन ।[x] तदनुविधायिना तत्प्रसाद-परिगृहीतेन धन्यविष्णुना तेनैव [स]हाविभक्त-पुण्य-विक्रयेण माता-पित्त्रोः

७. पुण्याप्यायनार्थमेष भगवतो वराह-मूर्त्तेर्ज्जगत्परायणस्य नारायणस्य शिला-प्रा[सादः] स्व-विष[ये] [ऽ*]स्मिन्नैरिकिणे कारितः ।(॥)

८. स्वस्त्यस्तु गो-ब्राह्मण-पुरोगाभ्यः सर्व्व-प्रजा[भ्य इ]ति ॥

---

## GWALIOR STONE INSCRIPTION OF MIHIRAKULA (*c.* 515-35 A. D.)

Regnal year 15

**Site**—Gwalior Fort, on a broken sand-stone slab built into the wall in the porch of a Sun-temple.

**Published in**—*R. L. Mitra*, JASB, Vol. XXXI, p. 391 ff. ; *Fleet*, Corp. Ins. Ind. Vol. III, No. 37, p. 162 f. ; *D. C. Sircar* Select Ins., p. 400 ff. ; *Bhandarkar's* list No. 2109.

**Language**—Sanskrit verse with a tinge of Prakrit.

**Script**—Northern Brahmi of 6th cent. A. D.

**Metres**—मालिनी 1, 2 ; आर्या 3-12 ; शार्दूल-विक्रीडित 13.

**Object**—Building of a temple of the Sun by a person named मातृचेट on the mountain called गोप, the hill on which the Gwalior Fort stands. The name Gwalior is derived from another name of this hill, viz., गोपालिकेर.

१. [१ ॥ स्वस्ति ॥*] [ज]यति जलद-वाल-ध्वान्तमुत्सारयन्स्वैः किरण-निवह-जालैर्व्योम विद्योतयद्भिः [।*] उ[दय-गिरि]-तटाग्र(ग्रं) मण्डयन् यस्तुर(रं)गैः चकित-गमन-खेद-भ्रान्त-चंचत्सटान्तैः ।[।१] उदय[गिरि]-

२. [⏑ – –] ग्रस्त-चक्रो [ऽ*]र्त्ति-हर्त्ता भुवन-भवन-दीपः शर्व्वरी-नाश-हेतुः [।*] तपित-कनक-वर्ण्णैरंशुभि ⁀ पङ्कजान[ा*]मभि-नव-रमणीयं यो विधत्ते स वो [ऽ*]व्यात् ।[।२] श्री-तोरम[ाण इ]ति यः प्रथितो

३. [भू-चक्र]पः प्रभूत-गुणः [।*] सत्य-प्रदान-शौर्य्याद्येन मही न्यायत[ः*] शास्ता [॥३*] तस्योदित-कुल-कीर्त्तेः पुत्रो [ऽ*]तुल-विक्रमः पतिः पृथ्व्याः [।*] मिहिरकुलेति-ख्यातो [ऽ*]भङ्गो यः पशु-पतिम[र्च्चयति ?] [॥४*]

४. [तस्मिन्रा]जनि शासति पृथ्वीं पृथु-विमल-लोचने [ऽ*]र्त्तिहरे [।*] अभिवर्द्धमान-राज्ये पंचदशाब्दे नृप-वृषस्य ।[।५*] शशि-रश्मि-हास-विकसित-कुमुदोत्पल-गन्ध-शीतलामोदे [।*] कार्त्तिक-मासे प्राप्त(प्ते) गगन-

५. [पतौ नि]र्म्मले भाति ।[।६*] द्विज-गण-मुख्यैरभिसंस्तुते च पुण्याह-नाद-घोषेण [।*] तिथि-नक्षत्र-मुहूर्त्ते संप्राप्ते सुप्रशस्त-दिने ।[।७*] मातृतुलस्य तु पौत्रः पुत्रश्च तथैव मातृदासस्य [।*] नाम्ना च मातृचेटः पर्व्व-

६. [त-दुर्ग्गानु*]वास्तव्यः [॥८*] नाना-धातु-विचित्रे गोपाह्वय-नाम्नि भूधरे रम्ये [।*] कारितवान्शैलमयं भानोः प्रासाद-वर-मुख्यम् ।[।९*] पुण्याभिवृद्धि-हेतोर्म्मातापित्रोस्तथात्मनश्चैव [।*] वसता(तां) च गिरि-वरे [ऽ*]स्मि[न्*] राज्ञः

७. ···· पा(?)देन [॥१०*] ये कारयन्ति भानोश्चन्द्रांशु-सम-प्रभं गृह-प्रवरं [।*] तेषां वासः स्वर्ग्गे यावत्कल्प-क्षयो भवति ॥[११*]

भक्त्या रवेर्व्विरचितं सद्धर्म-ख्यापनं सुकीर्त्तिमयं [।*] नाम्ना च केशवेति-प्रथितेन च ।

८. ...... .. दि(?)त्येन [॥१२*] यावच्छर्व्व-जटा-कलाप-गहने विद्योतते चन्द्रमा दिव्य-स्त्री-चरणैर्व्विभूषित-तटो यावच्च मेरुर्नगः [।*] यावच्चोरसि नील-नीरद-निभे विष्णुर्व्वि(र्बि)भर्त्युं-ज्व(ज्ज्व)लां श्रींस्ता(ता)वद्गिरि-मूर्ध्नि तिष्ठति

९. [शिला-प्रा]साद-मुख्यो रमे [॥१३*]

---

# MANDASOR STONE PILLAR INSCRIPTION
## OF YASODHARMAN (*c.* 525-35 A. D.)

**Site**—Mandasor (ancient Dasapura) on the left bank of river Siwana in Madhya Pradesha. The inscription is on one of the pairs of रण-स्तम्भs, lying about 60 feet apart from each other. The northern column contains a fragmentary duplicate copy of the same inscription.

**Published in**—*Fleet,* Corp. Insc. Ind., Vol. III, No. 33, p. 146 ff. ; *Kielhorn,* Ind. Ant., XVIII, p. 219 f., XX, p. 188 ; *D. C. Sircar,* Select Ins., p. 393 ff. ; *Bhandarkar's* list, No. 1870.

**Language**—Sanskrit verse except for the engraver's name at the end.

**Script**—Northern Brahmi with improvement on Allahabad Pillar and Mathura inscriptions.

**Metres**—स्रग्धरा 1-8 ; अनुष्टुभ् 9.

**Object**—The erection of columns describing the glory and power of Yasodharman, the extent of his empire, and his conquest of Mihirakula,

१. वेपन्ते यस्य भीम-स्तनित-भय-समुद्भ्रान्त-दैत्या दिगन्ताः शृङ्ग-घातैः सुमेरोर्व्विघटित-दृषदः कन्दरा यः करोति। उक्षाणं तं दधानः

क्षितिधर-तनया-दत्त-पञ्चाङ्गुलाङ्कं द्राघिष्ठः शूलपाणेः क्षपयतु भवतां शत्रु-तेजाङ्सि केतुः ॥ [१*]

२. आविर्भूतावलेपैरविनय-पटुभिर्ल्लङ्घिताचार-मार्गैर्म्मोहादैदंयुगीनैरपशुभ-रतिभिः पीड्यमाना नरेन्द्रैः। यस्य क्षमा शार्ङ्गपाणेरिवकठिन-धनुर्ज्या-किणाङ्क-प्रकोष्ठं बाहुं लोकोपकार-व्रत-सफल-परिस्पन्द-धीरं प्रपन्ना ॥ [२*]

३. निन्द्याचारेषु यो [ऽ*]स्मिन्विनय-मुषि युगे कल्पना-मात्त्र-वृत्या-(त्त्या) राजस्वन्येषु पाङ्सुष्विव कुसुम-बलिर्न्नाविभासे प्रयुक्तः। स श्रेयोधाम्नि सम्राडिति मनु-भरतालर्क्क-मान्धातृकल्पे कल्याणे हेम्नि भास्वान्मणिरिव सुतरां भ्राजते यत्र शब्दः ॥[३*]

४. ये भुक्ता गुप्त-नाथैर्न्न सकल-वसुधाक्क्रान्ति-दृष्ट-प्रतापैर्न्नाज्ञा हूणाधिपानां क्षितिपति-मुकुटाद्ध्यासिनी यान्प्रविष्टा देशांस्तान्धन्व-शैल-द्रुम-श(ग)हन-सरिद्वीर-बाहूपगूढान्वीर्य्यावस्कन्न-राज्ञः स्व-गृह-परिसरावज्ञया यो भुनक्ति ॥ [४*]

५. आ लौहित्योपकण्ठात्तल-वन-गहनोपत्यकादा महेन्द्रादा गङ्गाश्लिष्ट-सानोस्तुहिन-शिखरिणः पश्चिमादा पयोधेः। सामन्तैर्यस्य बाहु-द्रविण-हृत-मदैः पादयोरानमद्भिश्चूडा-रत्नाङ्शु-राजि-व्यतिकर-शबला भूमि-भागाः क्रियन्ते ॥ [५*]

६. स्थाणोरन्यत्र येन प्रणति-कृपणतां प्रापितं नोत्तमाङ्गं यस्याश्लिष्टो भुजाभ्यां वहति हिमगिरदुर्ग्गशब्दाभिमानम्। नीचैस्तेनापि यस्य प्रणति-भुज-बलावर्ज्जन-क्लिष्ट-मूर्द्धना चूडा-पुष्पोपहारैर्म्मिहिरकुल-नृपेणार्च्चितं पाद-युग्मं ॥ [६*]

७. [गा]मेवोन्मातुमूर्द्ध्वं विगणयितुमिव ज्योतिषां चक्क्र-वालं निर्द्देष्टुं मार्ग्गमुच्चैर्द्दिव इव सुकृतोपार्ज्जितायाः स्व-कीर्त्तेः। तेनाकल्पान्त-कालावधिरवनिभुजा श्री-यशोधर्म्मणा [ऽ*]यं स्तम्भः स्तम्भाभिराम-स्थिर-भुजपरिघेनोच्छ्रितिं नायितो [ऽ*]त्र ॥[७*]

८. [श्ल]ाघ्ये जन्मास्य वङ्शे चरितमघ-हरं दृश्यते कान्तमस्मिन्ध-र्म्मस्यायं निकेतश्चलति नियमितं नामुना लोक-वृत्तम् [।*] इत्युत्कर्षं गुणानां लिखितुमिव यशोधर्म्मणश्चन्द्र-बिम्बे रागादु-त्क्षिप्त उच्चैर्भुज इव रुचिमान्यः पृथिव्या विभाति ॥[८*]

९. इति तष्टूषया तस्य नृपतेः पुण्य-कर्म्मणः । वासुलेनोपरचिताः श्लोकाः कक्कस्य सूनुना ॥[९*] उत्कीर्ण्णा गोविन्देन ॥

---

## MANDASOR STONE INSCRIPTION OF YASODHARMAN alias VISHNUVARDHANA

The Malava year 589 (A. D. 532)

**Provenance**—Old well (inside the eastern entrance of the Fort) in Mandasor in which it was built up with the inscribed face inside.

**Published in**—*Fleet*, Corp. Insc. Ind., Vol. III, No. 35, pp. 152 ff., *Kielhorn*, Ind. Antiquary, Vol. XVIII, p. 220, XX, pp. 188 ff., ; *D. C. Sircar*, Select Inscriptions, pp. 386 ff ; *Bhandarkar's* list, No. 9.

**Language**—Sanskrit verse except for सिद्धम् and the engraver's name.

**Script**—Northern Brahmi with improvements on Allahabad Pillar and Mathura inscriptions.

**Metres**—पुष्पिताग्रा 1 ; शिखरिणी 2, 23 ; मालिनी 3, 5, 11, 13, 17, 18, 20-22, 26 ; उपजाति 4, 12 ; वसन्त-तिलका 6, 7 ; स्रग्धरा 8, 19, 27 ; शार्दूल-विक्रीडित 9 ; इन्द्रवज्रा 10 ; अनुष्टुभ् 14–16 ; आर्या 24 ; मन्दाक्रान्ता 25 ; शालिनी 28.

**Object**—Construction of a large well by a person named Daksha, the younger brother of धर्मदोष who was a minister of Yasodharman.

१. सिद्धम् [।।*] स जयति जगतां पतिः पिनाकी स्मित-रव-गीतिषु यस्य दन्त-कान्तिः । द्युतिरिव तडितां निशि स्फुरन्ती तरयति च स्फुटयत्यदश्च विश्वम् ॥[१*] स्वयम्भूर्भूतानां स्थिति-लय-[समु]-

२. त्पत्ति-विधिषु प्रयुक्तो येनाज्ञां वहति भुवनानां विधृतये । पितृत्वं चानीतो जगति गरिमाणं गमयता स शम्भुर्भूयान्सि प्रतिदिशतु भद्राणि भव[ताम्] ।।[२*] फण-मणि-गुरु-भार[क्वा]-

३. न्ति-दूरावनम्रं स्थगयति रुचमिन्दोर्म्मण्डलं यस्य मूर्ध्नाम् [।*] स शिरसि विनिबध्नन्रन्ध्रिणीमस्थिमालां सृजतु भवसृजो वः क्लेश-भङ्गं भुजङ्गः ।।[३*] षष्ट्या सहस्रैः सगरात्मजानां खात[ः*]

४. ख-तुल्यां रुचमादधानः । अस्योदपानाधिपतेश्चिराय यशान्सि पायात्पयसां विधाता ।।[४*] अथ जयति जनेन्द्रः श्री-यशोधर्म्म-नामा प्रमद-वनमिवान्तः शत्रुसैन्यं विगाह्य [।*] व्रण-

५. किसलय-भङ्गैर्य्यो [ऽ*]ङ्ग-भूषां विधत्ते तरुण-तरु-लतावद्वीर-कीर्त्तीर्व्विनाम्य ।।[५*] आजौ जिती विजयते जगतीम्पुनश्च श्री-विष्णुवर्द्धन-नराधिपतिः स एव । प्रख्यात औलिकर-लाञ्छन आत्म-

६. वङ्शो येनोदितोदित-पदं गमितो गरीयः ।।[६*] प्राचो नृपान्सु-बृहतश्च बहूनुदीचः साम्ना युधा च वशगान्प्रविधाय येन [।*] नामापरं जगति कान्तमदो दुरापं राजाधिराजपरमे-

७. श्वर इत्युदूढम् ।।[७*] स्निग्ध-श्यामाम्बुदाभैः स्थगित-दिनकृतो यज्वनामाज्य-धूमैरम्भो मेघ्यं मघोना [ऽ*]वधिषु विदधता गाढ-सम्पन्न-सस्याः । संहर्षाद्वाणिनीनां कर-रभस-हृतो-

८. द्यान-चूताङ्कुराग्रा राजन्वन्तो रमन्ते भुज-विजित-भुवा भूरयो येन देशाः ।।[८*] यस्योत्केतुभिरुन्मद-द्विप-कर-व्याविद्ध-लोध्र-द्रुमैरुद्धूतेन वनाध्वनि ध्वनि-नदद्विन्ध्याद्रि-रन्ध्रैर्ब्बलैः [।*] बाले-

९. यच्छ्वि-धूमरेण रजसा मन्दाङ्शु संलक्ष्यते पर्य्यावृत्त-शिखण्डि-चन्द्रक इव ध्यामं रवेर्म्मण्डलम् ।।[९*] तस्य प्रभोर्व्वङ्शकृतां नृपाणां पादाश्रयाद्विश्रुत-पुण्य-कीर्त्तिः । भृत्यः स्व-नैभृत्य-जिता-

१०. रि-षट्क आसीद्वसीयान्किल षष्ठिदत्तः ॥[१०*] हिमवत इव गाङ्गस्तुङ्ग-नम्रः प्रवाहः शशभृत इव रेवा-वारि-राशिः प्रथीयान् [।*] परमभिगमनीयः शुद्धिमानन्ववायो यत उदित-गरि-

११. म्णस्तायते नैगमानाम् ॥[११*] तस्यानुकूलः कुलजात्कलत्रात्सुतः प्रसूतो यशसां प्रसूतिः । हरेरिवाङ्शं वशिनं वराहं वराहदासं यमुदाहरन्ति ॥[१२*] सुकृति-विषयि(य)-तुङ्गं रूढ-मूलं

१२. धरायां स्थितिमपगत-भङ्गां स्थेयसीमादधानम् [।*] गुरु-शिखरमिवाद्रेस्तत्कुलं स्वात्म-भूत्या रविरिव रविकीर्त्तिः सुप्रकाशं व्यधत्त ॥[१३*] बिभ्रता शुभ्रमभ्रङ्शि स्मार्त्तं वर्त्मोचितं सताम् [।*] न विसंब्वा(वा)-

१३. दिता येन कलावपि कुलीनता ॥[१४*] धुत-धीदीधिति-ध्वान्तान्हविर्भुज इवाध्वरान् [।*] भानुगुप्ता ततः साध्वी तनयांस्त्रीनजीजनत् ॥ [१५*] भगवद्दोष इत्यासीत्प्रथमः कार्य्य-वर्त्मसु । आल-

१४. म्बनं बान्धवानामन्धकानामिवोद्धवः ॥ [१६*] बहु-नय-विधि-वेधा गह्वरे [ऽ*]प्यर्थ-मार्ग्गे विदुर इव विदूरं प्रेक्षया प्रेक्षमाणः । वचन-रचन-बन्धे संस्कृत-प्राकृते यः कविभिरुदि-

१५. तरागं गीयते गीरभिज्ञः ॥[१७*] प्रणिधि-दृगनुगन्त्रा यस्य बौद्धेन चाक्ष्णा न निशि तनु दवीयो वास्त्यदृष्टं धरित्र्याम् [।*] पदमुदयि दधानो [ऽ*]नन्तरं तस्य चाभूत्स भयमभयदत्तो नाम

१६. [विघ्न]न्प्रजानाम् ॥[१८*] विन्ध्यस्यावन्ध्य-कर्म्मा शिखर-तट-पतत्पाण्डु-रेवाम्बु-राशेर्गो-लाङ्गूलैः सहेल(लं) प्लुति-नमित-तरोः पारियात्रस्य चाद्रेः । आ सिन्धोरन्तरालं निज-शुचि-सचिवाद्ध्या-

१७. सितानेक-देशं राजस्थानीय-वृत्या(त्त्या) सुर-गुरुरिव यो वर्ण्णिनां भूतये [ऽ*]पात् ॥[१९*] विहित-सकल-वर्ण्णासङ्करं शान्त-

डिम्बं कृत इव कृतमेतद्येन राज्यं निराधि । स धुरमयमिदानीं

१८. दोषकुम्भस्य सूनुर्गुरु वहति तदूढां धर्म्मतो धर्म्मदोषः ।। [२०] स्व-सुखमनभिवाच्छ(ञ्छ)न्दुर्ग्गमे [ऽ*] ध्वन्यसङ्गां धुरमतिगुरु-भारां यो दधद्भर्त्तुरर्थे । वहति नृपति-वेषं केवलं लक्ष्म-मात्रं

१९. वलिनमिव विलम्बं कम्बलं बाहुलेयः ।।[२१*] उपहित-हित-रक्षा-मण्डनो जाति-रत्नैर्भुज इव पृथुलांसस्तस्य दक्षः कनीयान् [।*] महदिदमुदपानं खानयामास बिभ्र-

२०. च्छ्रुति-हृदय-नितान्तानन्दि-निर्दोषनामा ।।[२२*] सुखाश्रेय-च्छायं परिणति-हित-स्वादु-फलदं गजेन्द्रेणारुग्णं द्रुममिव कृतान्तेन बलिना । पितृव्यं प्रोद्दिश्य प्रियमभयदत्तं पृ-

२१. थु-धिया प्रथीयस्तेनेदं कुशलमिह कर्म्मोपरचितं ।।[२३*] पञ्चसु शतेषु शारदां यातेष्वेकान्ननवति-सहितेषु । मालव-गण-स्थिति-वशात्काल-ज्ञानाय लिखितेषु ।।[२४*] य-

२२. स्मिन्काले कल-मृदु-गिरां कोकिलानां प्रलापा भिन्दन्तीव स्मर-शर-निभाः प्रोषितानां मनांसि । भृङ्गालीनां ध्वनिरनुवनं तार-मन्द्रश्च यस्मिन्नाधूत-ज्यं धनुरिव नदच्छ्रूयते पुष्प-

२३. केतोः ।।[२५*] प्रियतम-कुपितानां [रामय]न्बद्ध-रागं किस-लयमिव मुग्धं मानसं मानिनीनां [।*] उपनयति नभस्वान्मान-भङ्गाय यस्मिन्कुसुम-समय-मासे तत्र निर्म्मापितो [ऽ*]यम् ।।[२५*]

२४. यावत्तुङ्गैरुदन्वान्किरण-समुदयं सङ्ग-कान्तं तरङ्गैरालिङ्गन्नि-न्दु-बिम्बं गुरुभिरिव भुजैः संविधत्ते सुहृत्ताम् [।*] बिभ्रत्सौधा-न्त-लेखा-वलय-परिगतिं मुण्ड-मालामिवायं सत्कूपस्तावदा-

२५. स्तामृत-सम-रस-स्वच्छ-विष्यन्दिताम्बुः ।।[२७*] धीमां(मान्) दक्षो दक्षिणः सत्य-सन्धो ह्रीमांच्छूरो वृद्ध-सेवी कृतज्ञः । बद्धो-त्साहः स्वामि-कार्य्येष्वखेदी निर्द्दोषो [ऽ*]यं पातु धर्म्मं चिराय ।।[२८*] उत्कीर्ण्णा गोविन्देन ।।

# MANDASOR STONE INSCRIPTION OF MALAVA SAMVAT 524 (467 A. D.)

**Site**—Mandasor (ancient Dasapura) in Madhya Pradesha ; on a stone stuck up in the inner face of the east wall of the fort at Mandasor.

**Published in**—*M. B. Garde*, Ep. Ind., XXVII, pp. 12 ff.

**Language**—Sanskrit verse except सिद्धम् & composer's name at the end.

**Script**—Southern variety of Gupta Brahmi.

**Object**—To record the construction of a stupa, a well, a *prapa* (charitable water stall) & an *arama* (garden or monastery). by Dattabhata, the Commander of the forces of king Prabhakara.

१. सिद्धम् [।*] ये[ने]दमुद्भव-निरोध-परंपरायां मग्नं जगद्विविध-दु॒ःख-निरन्तरायाम् [।*] तित्रासुना त्रिपदिरो निरदेशि धर्म्म-स्तस्मै नमो [ऽ*]स्तु सुगताय [ग]ताय शान्तिम् [॥१*]

२. गुप्तान्वय-व्योमनि चन्द्र-कल्पः श्री-चन्द्रगुप्त-प्रथिताभिधानः [।*] आसीन्नृपो लोकवि[लो]चनानां नवोदितश्चन्द्र इवापहर्त्ता [॥२*] भुवः-पती[नां] भुवि भूपतित्वमाच्छिद्य

३. धी-विक्क्रम-साधनेन [।*] नाद्यापि मोक्षं समुपैति येन स्व-वंश-पाशैरवपाशिता भूः [॥३*] गोविन्दवत्ख्यात-गुण-प्रभावो गोविन्दगुप्तोर्ज्जि[त*]-ना[मधे]यम् [।*] वसुन्धरेश-

४. स्तनयं प्रजज्ञे स दित्यदि[त्यो]स्तनयैस्सरूपम् [॥४*] य[स्मि]न्नृपैरस्तमित-प्रतापैश्शिरोभिरालिङ्गित-पाद-पद्मे । विचार-दो-[लां] विबुधाधिपो [ऽ*]पि शङ्का-परीतः

५. समुपा[रु]रोह [॥५*] सेनापतिस्तस्य बभूव नाम्ना वाय्वादिना रक्षित-पश्चिमेन [।*] यस्यारि-सेनास्समुपेत्य सेनां न कस्यचि-ल्लोचन-मार्ग्गमीयुः [॥६*] शौचानु-

६. राग-व्यं(व्य)वसाय-मेधा-दाक्ष्य-क्षमादिङ्गुण-राशिमेकः [।*] यशश्च यश्चन्द्र-मरीचि-गौरं दधार धाराधर-धीर-घोषः [॥७*] उदीच्य-भूभृत्कुल-चन्द्रिकायां स रा[ज]पुत्र्यां

७. जं(ज)नयांबभूव । नाम्ना [ऽऽ*]त्मजं दत्तभटं गुणानां कीर्त्तेश्च यो [ऽ*]भून्निलयः पि[ते]व ।[।८*] दाने धनेशं धियि वाचि चेशं रतौ स्मरं संयति पाश-पाणिम् [।*] यमर्त्थि-

८. विद्वत्प्रमदारि-वर्ग्गास्सम्भावयांचक्रुरनेकधैकम् [।।९*] गुप्ता-न्वयारिद्रुम-धूमकेतुः प्रभाकरो भूमिपतिर्य्यमेनम् [।*] स्वेषाम्ब-लानां बलदेव-वीर्य्यं गुणा-

९. नुरागादधिपं चकार [।।१०*] चिकीर्षुणा प्रत्युपकार-लेशं तेनैष पित्रोः शुभ-योग-सिद्ध्यै । स्तूप-[प्र]प्राराम-वरैरुपेतः कूपो [ऽ]र्ण्णवागाध-जलो व्यखानि ।[।११*] यस्मि-

१०. न्सुहृत्सङ्गम-शीतलञ्च मनो-मुनीनामिव निर्म्मलं च । वचो गुरूणामिव चाम्बु पथ्यं पेपीयमानः सुखमेति लोकः ।[।१२*] शरन्निशानाथ-करामलायाः

११. विख्यापके मालव-वङ्श(वंश)-कीर्त्तेः । शरद्गणे पञ्च शते व्यतीते त्रिघातिताष्टाभ्यधिके क्रमेण ।[।१३*] भृङ्गाङ्ग-भारा-लस-बाल-पद्मे काले प्रपन्ने रमणीय-साले ।

१२. गतासु देशान्तरित-प्रियासु प्रियासु काम-ज्वलनाहुतित्वम् [।।१४*] नात्युष्ण-शीतानिल-कम्पितेषु प्रवृत्त-मत्तान्यभृत-स्वते(ने)षु । प्रियाधरोष्ठारुण-पल्लवेषु

१३. नवां व[ह]त्सूपवनेषु कान्तिम् [।।१५*] यो धातु-मात्रे हत-धातु-दोषः सर्व्व-क्रिया-सिद्धिमुवाच तस्य । कुन्देन्दु-शुभ्रो [ऽ*]भ्र-विघृष्ट-यष्टिरयं कृतो धातुधरः सकूपः [।।१६*]

१४. अनेक-सरिदङ्गनाङ्ग-परिभोग-नित्योत्सवो महार्ण्णव इवाम्बुतो-(नो) निचय एष मा भूक्ष(त्क्ष)यी । सुरासुर-नरोरगेन्द्र-महितो [ऽ*]प्ययं धातु-धृक्परैतु सम-

१५. कालताममर-भूधरार्क्केन्दुभिः ।[।१७*] स्तूप-कूप-प्रपारामा ये चैते परिकीर्त्तिताः [।*] लोकोन्त(त्त)र-विहारस्य सीम्नि ते [ऽ*]भ्यन्तरीकृता[ः] ।।[१८*] रविलस्य कृतिः ।

# HARAHA STONE SLAB INSCRIPTION OF

## The Reign of ISANAVARMAN

### V. S. 611 (554 A. D.)

**Provenance**—A village near Haraha in the Barabanki Distt., U. P. Now in Lucknow Museum,

**Published in**—*Hirananda Sastri*, Ep. Ind., XIV, p. 110 ff.

**Language**—Sanskrit verse throughout except the name of the engraver.

**Script**—Northern Brahmi, resembling Gupta script of about the 6th cent. A. D.

**Metres**—शार्दूल-विक्रीडित 1, 2, 4, 8, 10-14, 16-19 ; गाथा 3 ; उपजाति 5 ; इन्द्र-वज्रा 6 ; मालिनी 7 ; स्रग्धरा 9, 22 ; द्रुत-विलम्बित 15 ; वसन्त-तिलका 20 ; अनुष्टुभ् 21, 23.

**Object**—Rebuilding of a small dilapidated temple of the slayer of Andhaka (Siva) by Suryavarman, the son of the Maukhari king, Isanavarman, during his father's reign. He made it much higher than it was originally and gave it the name of क्षेमेश्वर.

१. लोकाविष्कृति-संक्षय-स्थिति-कृतां यः कारणं वेधसाम् ध्वस्त-ध्वान्तचयाः परास्त-रजसो ध्यायन्ति यं योगिनः । यस्यार्द्ध-स्थित-योषितो (ऽ*) पि हृदये नास्थायि चेतो-भुवा भूतात्मा त्रिपु-रान्तकः

२. स जयति श्रेयः-प्रसूतिर्भवः ॥[१॥*] आशोणां फणिनः फणो-पल-रुचा सैङ्घीं (सैंहीं) वसानं त्वचं शुभ्रां लोचन-जन्मना कपिशयद्भासा कपालावलीम् [।*] तन्वीं ध्वान्त-नुदं मृगाकृति-भृतो बिभ्रत्कलां मौलिना ।x दिश्यादन्ध-

३. क-विद्विषः स्फुरदहि स्थेयः पदं वो वपुः ॥[२॥*] सुत-शतं लेभे नृपो [ऽ*]श्वपतिर्व्वैवस्वताद्यद्गुणोदितम् [।*] तत्प्रसूता दुरित-वृत्ति-रुधो मुखराः क्षितीशाः क्षतारयः ॥[३॥*] तेष्वापे हरि-वर्म्मणा [ऽ*]वनि-भुजा भूतिभु-

४. वो भूतये ।x रुद्धाशेष-दिगन्तराल-यशसा रुग्णारि-संपत्त्विषा । सङ्ग्रामे हुतभुक्प्रभा-कपिशितं वक्त्रं समीक्ष्यारिभिर्यो भीतैः(तैः)

प्रणतस्ततश्च भुवने ज्वाला-मुखाख्यां गतः ॥[॥*] लोकस्थितीनां स्थितये स्थि-

५. तस्य मनोरिवाचार-विवेक-मार्ग्गे । जगाहिरे यस्य जगन्ति रम्याः सत्कीर्त्तयः कीर्त्तयतिव्य-नाम्नः ॥[५॥*] तस्मात्पयोधेरिव शीत-रश्मिरादित्यवर्म्मा नृपतिर्ब्बभूव । वर्णाश्रमाचार-विधि-प्रणीतेयँ प्राप्य

६. साफल्यमियाय धाता ॥[६॥*] हुतभुजि मख-मध्यासङ्गिनि ध्वान्त-नीलम् वियति पवन-जन्म-भ्रान्ति-विक्षेप-भूयः । मुखरयति समन्तादुत्पतद्धूम-जालम् शिखि-कुलमुरु-मेघाशङ्कि यस्य

७. प्रसक्तम् ॥[७॥*] तेनापीश्वरवर्म्मणः क्षितिपतेः क्षत्र-प्रभावाप्तये जन्माकारि कृतात्मनः क्रतु-गणेष्वाहूत वृत्त्र-द्विषः । यस्योत्खात-कलि-स्वभाव-चरितस्याचार-मार्ग्गं नृपा यत्नेनापि ययाति-

८. तुल्ययशसो नान्ये [ऽ*]नुगन्तुं क्षमाः ॥[८॥*] नीत्या शौर्यं विशालं सुहृदमकुठि(टि)ने(ले)नोत्तमेच्छाङ्कुलेन ।x त्यागं पात्रेण वित्त-प्रभवमपि हृ(ह्रि)या यौवनं संयमेन [।*] वाचं सत्येन चेष्टां श्रुति-पथ-विधिना प्रश्रये-

९. णोत्तमर्द्धिम् यो बध्नंनै(ध्नन्नै)व खेदं व्रजति कलिमय-ध्वान्त-मग्ने [ऽ*]पि लोके ॥[९॥*] यस्येज्यास्वनिशं यथा-विधि हुत-ज्योतिर्ज्वलज्जन्मना ।x धूमेनाञ्जन-भङ्ग-मेचक-रुचा दिक्चक्र-वाले तते । आयाता नव-

१०. वारि-भार-विनमन्मेघावली प्रावृडित्युन्मादोद्धत-चेतसः शिखि-गणा वाचालतामाययुः ॥[१०॥*] तस्मात्सूर्य्य इवोदयाद्रि-शिरसो धातुर्म्मरुत्वानिव क्षीरोदादिव तर्जितेन्दु-किरणः कान्त-प्रभः कौस्तुभः [।*]

११. भूतानामुदपद्यत स्थिति-करः स्थेष्ठं महिम्नः पदम् राजन्राजक-मण्डलाम्बर-शशी श्रीशानवर्म्मा नृपः ॥[११॥*] लोकानामुपकारि-

णारि-कुमुद-व्यालुप्त-कान्ति-श्रिया ।x मित्रस्याम्बुरुहाग(क)र-
द्युतिकृता भूरि-

१२. प्रताप-त्विषा । येनाच्छादित-सत्पथं कलि-युग-ध्वान्तावभग्नञ्जग-
त्सूर्य्येणेव समुद्यता कृतमिदं भूयः प्रवृत्तक्रियम् ।।[१२।।*]
जित्वा [ऽऽ*]न्ध्राधिपतिं सहस्र-गणित-त्रेधा [ऽ*]क्षरद्वारणम्
व्यावल्गन्नियुताति-

१३. संख्य-तुरगान्मङ्क्त्वा रणे सूलिकाम् (न्) [।*] कृत्वा चायति-मौ
(मो)चित-स्थल-भुवो गौडान्समुद्राश्रयानध्यासिष्ट नत-क्षितीश-
चरणः सिंहासनं यो जिती ।।[१३।।*] प्रस्थानेषु बलार्ण्णवाभि-
गमन-क्षोभ-स्फुटद्भू तल-

१४. प्रोद्भू त-स्थगितावर्क-मण्डल-रुचा दिग्व्यापिना रेणुना । यस्या-
मूढ-दिनादि-मध्य-विरतौ लोके [ऽ*]न्धकारीकृते ।x व्यक्ति
नाडिकयैव यान्ति जयिनो यामास्त्रियामास्विव ।।[१४।।*]
प्रविशती कलि-मारुत-घट्टिता

१५. क्षितिरलक्ष्य-रसातल-वारिधौ । गुण-शतैरवबध्य समन्ततः स्फु-
टित नौरिव येन बलाद्धि(द्धृ)ता ।।[१५।।*] ज्याघात-व्रण-रूढि-
कर्क्कश-भुजा व्याकृष्ट-शार्ङ्ग-च्युतान्यस्यावाप्य पतत्त्रिणो रण-
मखे प्राणानमुञ्च-

१६. न्द्विषः । यस्मिन्शासति च क्षितिं क्षिति-पतौ जातेव भूयस्त्रयी ।x
तेन ध्वस्त-कलि-प्रवृत्ति-तिमिरः श्री-सूर्य्यवर्म्मा [ऽ*]जनि ।।
[१६।।*] यो बालेन्दु-सकान्ति कृत्स्न-भुवन-प्रेयो दधद्यौवनम्
शान्तः शास्त्र-विचारणा-

१७. हित-मनाः पारङ्कलानाङ्गतः । लक्ष्मी-कीर्त्ति-सरस्वती-प्रभृतयो
यं स्पर्धयेवाश्रिता लोके कामित-कामि-भाव-रसिकः कान्ता-जनो
भूयसा ।।[१७।।*] सद्वृत्तेन बलात्कलेरवनतिता(स्ता)वत्प्रवृद्धा-
त्मनो बाणैं-

१८. स्तावदवस्थितं स्मृति-भुवः कान्ता-शरीर-क्षतौ । लक्ष्म्या तावद-
काण्ड-भङ्गज-भयं त्यक्तम्परापाश्रयम् यावन्नाविरकारि यस्य

जनता-कान्तं वपुर्व्वेधसा ॥[१८॥*] लक्ष्म्याः शत्रु-भुवः कुच-ग्रह-भयावेश-भ्रम-

१९. ल्लोचना ।x येनाकृष्य भुजेन विस्फुरदसि-ज्योतिः-करणासङ्गिना । कान्ता-मन्मथिनेव कामित-विदा गाढं निपीड्योरसा ।x प्रायेणान्य-मनुष्य-संश्रय-कृतं भावं परित्याजिता ॥[१९॥*] तेनानतोन्नति-कृता

२०. मृगया गतेन दृष्ट्वा [ऽऽ*]ह्यमन्धक-भिदो भवनं विशीर्णम् [।*] स्वेच्छा-समुन्नतमकारि ललाम भूमेः क्षेमेश्वर-प्रथित-नाम शशाङ्क-शुभ्रम् ॥[२०॥*] एकादशातिरिक्तेषु षट्सु शातित-विद्विषि । शतेषु शरदां-

२१. पत्यौ भुवः श्रीशानवर्म्मणि ॥[२१॥*] यस्मिनकाले [ऽ*]म्बुवाहा नव-गवल-रुचः प्रान्त-लग्नेन्द्र-चापास्तन्वन्त्याशा-वितानं स्फुर-दुरु-तडितः सान्द्र-धीरं क्वणन्तः । वाताश्चावान्ति नीपान्नव-कुसुम-चयानम्र-मूर्ध्नो

२२. धुनानास्तस्मिन्मुक्ताम्बु-मेघ-द्युति भवनमदो निर्म्मितं शूल-पाणेः ॥[२२॥*] कुमारशान्तेः पुत्रेण गर्ग्गराकट-वासिना । नृपानु-रागात्पूर्व्वेयमकारि रविशान्तिना ॥[२३॥*] उत्कीर्ण्णा मिहिर-वर्म्मणा ।

---

# MALIYA COPPER-PLATE INSCRIPTION OF MAHARAJA DHARASENA

The year 252 (571-72 A. D.)

**Provenance**—Maliya, Junagadh, Kathiawar.

**Published in**—*Fleet*, Ind. Ant., Vol. XIII, p. 160 ff., Corp. Insc. Ind., Vol. III, No. 38, pp. 164 ff.

**Language**—Sanskrit prose except for the benedictive and imprecatory verses.

**Script**—Southern Brahmi.

**Metre**—अनुष्टुभ् 1, 3.

**Object**—To record the grant, by the Valabhi Maharaja Dharasena II, to a Brahmana, for the maintenance of five great sarcificial rites, some lands at the villages of *Antaratra*, *Dombhigrama* and *Vajragrama*.

*First side*

१. ॐ स्वस्ति वलभीतः प्रसभ-प्रणतामित्राणां मैत्रकाणामतुल-बल-सपत्न-मण्डलाभोग-संसक्त-संप्रहार-शत-लब्ध-प्रतापः

२. प्रतापोपनत-दान-मानार्ज्जवोपार्ज्जितानुरागानुरक्त-मौलभृत-मित्र-श्रेणी-बलावाप्त-राज्य-श्रीः परम-माहेश्वरः श्री-सेनापति-

३. भटार्क्कः [।।*] तस्य सुतस्तत्पाद-रजो-[ऽ*]रुणावनत-पवित्रीकृत-शिराः शिरोवनत-शत्रु-चूडामणि-प्रभा-विच्छुरित-पाद-नख-पङ्क्तिदीधितिर्द्दी-

४. नानाथ-कृपण-जनोपजीव्यमान-विभवः परममाहेश्वरः श्री-सेना-पति-धरसेनस्तस्यानुजस्तत्पाद-प्रणाम-प्रशस्ततर-विमल-

५. [मौलि*]-मणिर्म्मन्वादि-प्रणीत-विधि-विधान-धर्म्मा धर्म्मराज इव विहित-विनय-व्यवस्था-पद्धतिरखिल-भुवन-मण्डलाभोगैक-स्वामिना-परम-स्वामिना

६. स्वयमुहित-राज्याभिषेकः महा-विश्राणनावपूत-राज्य-श्रीः परम-माहेश्वरो महाराज-द्रोणसिंहः सिंह इव [।।*] तस्यानुजः स्व-भुज-

७. बल-पराक्रमेण पर-गज-घटानीकानामेक-विजयी शरणैषिणां शरणमवबोधा(द्धा) शास्त्रार्थ-तत्वा(त्त्वा)नां कल्पतरुरिव सुहृत्प्र-

८. णयिनां यथाभिलषित-काम-फलोपभोगदः परमभागवतः श्री-महाराज-ध्रुवसेनस्तस्यानुजस्तच्चरणारविन्द-प्रणति-प्र-

९. विधौताशेष-कल्मषः सुविशुद्ध-म्य(स्व)-चरितोदक-प्रक्षालित-सकल-कलि-कलङ्कः प्रसभ-निर्ज्जिताराति-पक्ष-प्रथित-महिमा

१०. परमादित्य-भक्तः श्री-महाराज-धरपट्टस्तस्यात्मजस्तत्पाद-सपर्य्या-वाप्त-पुण्योदय[:*] शैशवात्प्रभृति-खड्ग-द्वितीय-बाहुरे-

११. व समद-पर-गज-घटा-[ऽऽ*]स्फोटन-प्रकाशित-सत्व(त्त्व)-निकषः तत्प्रभाव-प्रणतारराति-चूडारत्न-प्रभा-संसक्त-सख्य(व्य)-पा-

१२. द-नख-रश्मि-संहति[:*] सकल-स्मृति-प्रणीत-मार्ग्ग-सम्यक्परि-पालन-प्रजा-हृदय-रञ्जनादन्वर्थ-राज-शब्दो रूप-कान्ति-स्थैर्य्य-

१३. गाम्भीर्य्य-बुद्धि-संपद्भिः स्मर-शशाङ्कार्द्रि(द्रि)राजोदधि-त्रिदश-गुरु-धने[शा*]नतिशयाना(नो) [ऽ*]भय-प्रदान-परतया तृण-व-

१४. दपास्त[ा*]शेष-स्व-कार्य्य-फलः पदचारीव सकल-भुवन-मण्डला-भोग-प्रमोदः परममाहेश्वरः श्री-महारा-

१५. ज-गुहसेनः [॥*] तस्य सुतस्तत्पाद-नख-मयूख-संतान-निर्वृत्त-जाह्नवी-जलो(लौ)घ-विक्षालिताशेष-कल्मषः प्रणयि-शत-

१६. सहस्रोपजीव्य-भोग-संपत् रूप-लोभादिवाश्रृ(श्रि)तस्सरसमाभिग-मिकैर्गुणै[:*] सहज-शक्ति-शिक्षा-विशेष-विस्मा-

१७. पिताखिल-धनुर्धरः प्रथम-नरपति-समतिसृष्टानामनुपालयिता धर्म्म्य(र्म्म)-दायानामपाकर्त्ता

१८. प्रजोपघात-कारिणामुपप्लवानां दर्शयिता श्री-सरस्वत्योरेकाधि-वासस्य संहताराति-

*Second Plate*

१९. पक्ष-लक्ष्मी-परिक्षोभ-दक्ष-विक्रमः क्रमोपसंप्राप्त विमल-पार्त्थिव-श्रीः परममाहेश्वरः महाराज-

२०. श्रि(श्री)-धरसेनः कुशली सर्व्वानेवायुक्तक-विनियुक्तक-द्राङ्गिक-महत्तर-चाट-भट-ध्रुवाधिकरणिक-दण्डपाशिक-

२१. राजस्थानीय-कुमारामात्यादीनन्यांश्च यथा-संबध्यमानकान् समाज्ञापयत्यस्तु वः संविदितं यथा मया माता-

२२. पित्रोः पुण्याप्यायनायात्मनश्चैहिकानुष्मिक-यथाभिलषित-फला-
वाप्तये अन्तरत्रायां शिवक-पद्रके वीरसेन-

२३. दन्तिक-प्रत्यय-पादावर्त्त-शतं एतस्मादपरतः पादावर्त्ता पञ्च-
दश तथा अपर-सीम्नि स्कम्भसेन-प्रत्यय-पादावर्त्त-शतं विंशाधिकं

२४. पूर्व्व-सीम्नि पादावर्त्ता दश डोम्भिग्रामे पूर्व्व-सीम्नि वर्द्धकी-प्रत्यय-
पादावर्त्ता नवति[:*] वज्रग्रामे [ऽ*]पर-सीम्नि ग्राम-शिखर-
पादावर्त्त-शतं

२५. वी(?)कि(?)दिन्न-महत्तर-प्रत्यया अष्टाविङ्शति-पादावर्त्त-परि-
सरा वापी । भुम्भुस-पद्रके-कुटुम्वि(म्बि)-बोटक-प्रत्यया(य)-
पादावर्त्त-शतं

२६. वापी च । एतत्सोद्रङ्गं सोपरिकरं स-वात-भूत-धान्य-हिरण्यादेयं
सोत्पद्यमान-विष्टी(ष्टि)कं समस्त-राजकीयानाम-

२७. हस्त-प्रक्षेपणीयं भूमि-च्छिद्र-न्यायेन उन्नत-निवासी(सि)-वाज-
सेनयी(यि)-कण्व-वत्स-सगोत्र-ब्राह्मण-रुद्रभूतये बलि-चरु-वैश्व-

२८. देवाग्निहोत्रातिथि-पञ्चमहायाज्ञिकानां क्रियाणां समुत्सर्प्पणार्त्थं-
मा चन्द्रार्क्कार्ण्णव-सरित्क्षिति-स्थिति-समकालीनं पुत्र-पौ-

२९. त्रान्वय-भोग्यं उदक-सर्ग्गेण निसृष्टं [।*] यतो ऽस्योचितया ब्रह्म-
देय-स्थित्या भुंजतः कृषतः कर्षयतः प्रदिशतो वा

३०. न कैश्चित्प्रतिषेधे वर्त्तितव्यं [।*] [आ*]गामि-भद्र-नृपतिभिश्चा-
स्मद्वंशजैरनित्यान्यैश्वर्य्याण्यस्थिरं मानुष्यं सामान्यं च भूमि-

३१. दान-फलमवगच्छद्भिरयमस्मद्दायो [ऽ*]नुमन्तव्यः परिपालयितव्यश्च
[।*] यश्चैनमाच्छिन्द्यादाच्छिद्यमानं चानु-

३२. मोदेत स पञ्चभिर्म्महापातकै[:*] ।।x सोपपातकै[:*] ।।x स(सं)-
युक्तस्स्यादित्युक्तं च भगवता वेद-व्यासेन व्यासेन ।।(।)

३३. षष्टिं वर्ष-सहस्राणि स्वर्ग्गे तिष्ठति भूमि-दः [।*] आच्छेत्ता
चानुमन्ता च ।x तान्येव नरके वसेत् ।।[१*] पूर्व्व-दत्तां

३४. द्विजातिभ्यो यत्नाद्रक्ष युधिष्ठिर ।।(।) मही(हीं) महिमतां श्रेष्ठ ।।ˣ दानाच्छ्रेयो [ऽ*]नुपालनम् ।।[२*] बहुभिर्व्वसुधा भुक्ता

३५. राजभिस्सगरादिभिः ।[।३*] यस्य यस्य यदा भूमिः तस्य तस्य तदा फलमितिः(ति) ।(।।) लिखितं स[ा*]न्धिविग्रहिक-स्कन्द-भटेन ।। सं २०० ५० २ वैशाख ब १० ५ [।।*]

---

## MADHUBAN PLATE OF HARSHA

### The year 25

**Provenance**—Madhuban, Nathupur pargana, Tehsil Sagri, Azamgarh Distt., U.P.

**Published in**—*F. Kielhorn*, Ep. Ind., Vol. VII, pp. 155 ff.

**Language**—Sanskrit prose, except for three verses.

**Script**—North-western class of Brahmi, resembling that of Lakha Mandal inscription.

**Metres**—शार्दूल-विक्रीडित 1 ; वसन्त-तिलका 2 ; अनुष्टुभ् 3.

**Object**—Grant by King Harsha, of the village सोमकुण्डका in the कुण्ड-धानी विषय of the श्रावस्ति भुक्ति, which had been previously held by a Brahmana on the strength of a forged charter, to two other Brahmanas.

१. ॐ स्वस्ति [।।*] महा-नौ-हस्त्यश्व-जयस्कन्धावारात्कपित्थिकायाः महाराज-श्री-नरवर्द्धनस्तस्य पुत्रस्तत्पादानुध्यातः श्री-वज्रिणी-देव्यामुत्पन्नः परमादित्य-भक्तो

२. महाराज-श्री-राज्यवर्द्धनस्तस्य पुत्रस्तपादानुध्यातः श्री-अप्सरो-देव्यामुत्पन्नः परमादित्य-भक्तो महाराज-श्रीमद(दा)दित्यवर्द्धन-स्तस्य पुत्रस्तत्पादानुध्यातः श्री-महा-

३. सेनगुप्ता-देव्यामुत्पन्नश्चतुस्समुद्रातिक्रान्त-कीर्त्तिः प्रतापानुरागो-पनतान्य-राजा(जो) वर्ण्णाश्रम-व्यवस्थापन-प्रवृत्त-चक्र एक-चक्र-रथ इव प्रजानामार्त्ति-हरः

४. परमादित्य-भक्तः परम-भट्टारक-महाराजाधिराज-श्री-प्रभाकर-वर्द्धनस्तस्य पुत्रस्तत्पादानुध्यातः सित-यशः-प्रतान-विच्छुरित-सकल-भुवन-मण्डलः परिगृहीत-

५. धनद-वरुणेन्द्र-प्रभृति-लोकपाल-तेजाः सत्पथोपार्ज्जितानेक-द्रविण-भूमि-प्रदान-सम्प्रीणितार्थि-हृदयो [ऽ*]तिशयित-पूर्व्वराज-चरितो देव्याममल-यशोमत्यां

६. श्री-यशोमत्यामुत्पन्नः परम-सौगतः सुगत इव परहितैक-रतः परम-भट्टारक-महाराजाधिराज-श्री-राज्यवर्द्धनः राजानो युधि दुष्ट-वाजिन इव श्री-देवगुप्ता-

७. दयः कृत्वा येन कशा-प्रहार-विमुखाः सर्व्वे समं संयताः [।*] उत्खाय द्विषतो विजित्य वसुधां कृत्वा प्रजानां प्रियं प्राणानुज्झितवानराति-भवने सत्यानुरोधेन यः [।।१।।*] तस्यानुज-

८. स्तत्पादानुध्यातः परम-माहेश्वरो महेश्वर इव सर्व्व-सत्वा(त्त्वा)-नुकम्पी परम-भट्टारक-महाराजाधिराज-श्री-हर्षः श्रावस्ति-भुक्तौ कुण्डधानि-वैषयिक-सोमकुण्डका-ग्रामे

९. समुपगतां(तान्) महासामन्त-महाराज-दौस्साध-साधनिक-प्रमातार-राजस्थानीय-कुमारामात्योपरिक-विषयपति-भट-चाट-सेवका-दीन्प्रतिवासि-जनपदा(दां)श्च समा-

१०. ज्ञापयत्यस्तु वः सम्वि(संवि)दितं(त)मयं सोमकुण्डका-ग्रामो व्रा(ब्रा)ह्मण-वामरथ्येन कूट-शासनेन भुक्तक इति विचार्य यतस्तच्छासनं भङ्क्त्वा तस्मादाक्षिप्य च स्व-सीमा-

११. पर्यन्त-सोद्रङ्गः सर्व्व-राजकुलाभाव्य-प्रत्याय-समेतः सर्व्व-परिहृत-परिहारो विषयादुद्धृत-पिण्डः पुत्र-पौत्रानुगः चन्द्रार्क्क-क्षिति-सम-कालीनो

१२. भूमिच्छिद्र-न्यायेन मया पितुः परम-भट्टारक-महाराजाधिराज-श्री-प्रभाकरवर्द्धनदेवस्य मातुः परम-भट्टारिका-महादेवी-राज्ञी-श्री-यशोमती-देव्याः

१३. ज्येष्ठ - भ्रातृ- परमभट्टारक-महाराजाधिराज - श्री - राज्यवर्द्धनदेव-पादानां च पुण्य-यशो [ऽ*]भिवृद्धये सार्वण्णि-सगोत्र-च्छन्दोग-सव्र(ब्र)ह्मचारि-भट्ट-वातस्वामि-

१४. विष्णुवृद्ध-सगोत्र-व(ब)ह्वृ‌च-सव्र(ब्र)ह्मचारि-भट्ट-शिवदेव-स्वामि-भ्यां प्रतिग्रह-धर्म्म(र्म्मे)णाग्रहारत्वेन प्रतिपादितः [।*] विदित्वा भवद्भिः समनुमन्तव्यः प्रति-

१५. वासि-जनपदैरप्याज्ञा-श्रवण-विधेयैर्भूत्वा यथासमुचित-तुल्य-मेय-भाग-भोग-कर-हिरण्यादि-प्रत्यायाः अनयोरेवोपनेयाः सेवोपस्थानं च करणीयमित्य(ति । अ)-

१६. पि च ॥ अस्मत्कुल-क्क्रममुदारमुदाहरद्भिरन्यैश्च दानमिदमभ्य-नुमोदनीयं [।*] लक्ष्म्यास्तडित्सलिल-वुद्बु(बुद्बु)द-चंचलायाः दानं फलं पर-यशः-परिपालनं च ।।[२।।*] कर्म्मणा

१७, मनसा वाचा कर्त्तव्यं प्राणिने हितं [।*] हर्षेणैत[त्*] समाख्यातं धर्म्मार्ज्जनमनुत्तमं ।।[३।।*] दूतको [ऽ*]त्र महाप्रमातार-महा-सामन्त-श्री-स्कन्दगुप्तः [।*] महाक्षपटलाधिकरणाधि-

१८. कृत-सामन्त-महाराजेश्वरगुप्त-समादेशाच्चोत्कीर्ण्णं गर्ज्जरेण [।।*] सम्वत्(संवत्) २० ५ मार्ग्गशीर्ष-वदि ६ [।।*]

---

## APHSAD STONE INSCRIPTION OF ADITYASENA

**Provenance**—Village Aphsad in Nawada Tehsil, Distt. Gaya. The original stone is now lost.

**Published in**—*Fleet*, Corp. Insc. Ind., Vol. III, No. 42, p. 200 ff.

**Language**—Sanskrit verse.

**Script**—Northern Alphabet of Kutila variety of मगध of 7th cent.

**Metres**—शार्दूल-विक्रीडित 1, 5, 14, 16, 17, 20, 25, 26, 28, 29 ; आर्या 2, 4, 6, 7, 12, 15 ; स्रग्धरा 3, 8, 21, 24 ; वसन्त-तिलका 11, 18, 19, 22 ; अनुष्टुभ् 9, 10, 13, 23, 27, 30.

**Object**—Building of a Vishnu temple by Adityasena of the family of the Later Guptas of Magadha, a religious College or monastery by his mother श्रीमती, and the excavation of a tank by his wife कोणदेवी.

१. ॐ [।।*] आसीद्दन्ति-सहस्र-गाढ-कटको विद्याधराध्यासितः सद्वंशः स्थिर उन्नतो गिरिरिव श्रीकृष्णगुप्तो नृपः । दृप्तारातिमदान्ध-वारण-घटा-कुम्भ-स्थलीः क्षुन्दता यस्यासंख्य-रिपु-प्रताप-जयिना दोष्णा मृगेन्द्रायितं ।।[१*] सकलः कलङ्क-रहितः

२. क्षत-तिमिरस्तोयधेः शशाङ्क इव । तस्मादुदपादि सुतो देवः श्री-हर्षगुप्त इति ।।[२*] यो योग्याकाल-हेलावनत-दृढ-धनुर्भीम-वा-(बा)णौघ-पाती मूर्तै(त्तैं): स्व-स्वामि-लक्ष्मी-वसति-विमुखितै-रीक्षितः सास्र (श्रु)-पातं । घोराणामा-

३. हवानां लिखितमिव जयं श्लाघ्यमाविर्द्दधानो वक्षस्युद्दाम-शस्त्र-व्रण-कठिन-किण-ग्रन्थि-लेखा-च्छलेन ।।[३*] श्री-जीवितगुप्तो [ऽ*]भूत्क्षितीश-चूडामणिः सुतस्तस्य । यो दृप्त-वैरि-नारी-मुख-नलिन-वनैक-शेसे(शिशि)रकरः ।।[४*]

४. मुक्तामुक्त-पयः-प्रवाह-शिशिरासूत्तुङ्ग-ताली-वन-भ्रास्यद्दन्ति-करा-वलून-कदली-काण्डेषु वेलास्वापि । श्च्योतत्स्फार-तुषार-निर्झर-पयः-शीते [ऽ*]पि शैले स्थितान्यस्योच्चैर्द्विषतो मुमोच

५. न महाघोरः प्रताप-ज्वरः ।।[५*] यस्यातिमानुषं कर्म्म दृश्यते वि-स्मयाज्जनौघेन । अद्यापि कोशवर्द्धनतटात्प्लुतं पवनजस्येव ।।[६*] प्रख्यात-शक्तिमाजिषु पुरः-सरं श्री-कुमा-

६. रगुप्तमिति । अजनयदेकं स नृपो हर इव शिखि-वाहनं तनयं ।।[७*] उत्सर्प्पद्वात-हेला-चलित-कदलिका-वीचि-माला-वितानः प्रोद्यद्धूली-जलौघ-भ्रमित-गुरु-महामत्त-

७. मातङ्ग-शैलः । भीमः श्रीशानवर्म्म-क्षितिपति-शशिनः सैन्य-दुग्धोद-सिन्धुर्ल्लक्ष्मी-संप्राप्ति-हेतुः सपदि विमथितो मन्दरीभूय येन ।।[८*] शौर्य-सत्य-व्रत-धरो यः प्रयाग-गतो ध-

चिन्ता-ज्वरं शमयिता [ऽ*]ऽर्त्तं-जन-

१४. स्य दृष्ट्या

धन्वन्तरेरपि हि येन हृतः प्रभावः ।

यश्चेप्सितार्थ-परिपूर्ण्ण-मनोरथेन

लोकेन कल्पतरु-तुल्यतया गृहीतः ।।[१२*]

तेनैतद-

१५. त्र कृतमात्म-मनोवदुच्चै-

र्वज्रासनस्य भवनं भुवनोत्तमस्य ।

संजायते यदभिवीक्ष्य विमानगानां

कैलास-मन्दर-महीधर-शृङ्ग-शङ्का ।।[१३*]

सर्व्व-

१६. स्वोपनयेन सत्व (त्त्व)-सुहृदामौदार्यमभ्यस्यता

सम्वो (म्बो) धौ विहित-स्पृहं सह गुणैर्विस्पर्द्धि वीर्यन्तथा ।

अत्रस्थेन निजे निजाविह वृ (बृ) हत्पुण्याधिकारे

१७. स्थिते

येन स्वेन यशो-ध्वजेन घटितौ वङ्शा (वंशा) वुदीची-

पथे ।।[१४*]

सोपान-मार्गमिव मुक्ति[पुर]स्य कीर्त्ति-

मेताम्वि (तां वि)धाय कुशलं यदुपात्तमस्मात् ।

१८. कृत्वा [ऽऽ*]दितः स-पितरं गुरु-वर्गमस्य

सम्वो (सम्बो) धिमेतु जन-राशिरशेष एव ।।[१५*]

यावत्कूर्म्मो जलधि-वलयं भूत-धात्रीं वि(बि)भर्त्ति

ध्वान्त-ध्वन्सी(ध्वंसी)

तपति तपनो यावदेवोग्र-रश्मिः ।

१९. स्निग्धालोकाः शिशिरमलसा यामवत्यश्च याव-

त्तावत्कीर्त्तिर्जयतु भुवने वीरदेवस्य शुभ्रा ।।[१६*]

---